॥ ॐ ॥

# ॥ श्रीपंचदशी ॥

द्वितीयावृत्ति ।

अनुभूतिप्रकाशसारोद्धारादियुक्ता च

ब्रह्मनिष्ठश्रीपंडितपीतांबरैः संशोधिता ॥

सा

मुमुक्षूणां हितार्थं

सालेमहंमदात्मजशरीफसंज्ञकेन

मुम्बापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागराख्यमुद्रण-

यंत्रालये मुद्रापयित्वा प्रसिद्धिं प्रणीता ॥

॥ संवत् १९५०—सन १८९४ ॥

तावद्गर्जंति शास्त्राणि जंबुका विपिने यथा ॥
न गर्जति महाशक्तिर्यावद्वेदांतकेसरी ॥ १ ॥

## ॥ ॐ परमात्मने नमः ॥

## ॥ प्रथमावृत्तिप्रस्तावनिका ॥

इह जगति वेदांतविषयप्रतिपादका यावंतो वेदांतग्रंथाः संति तेष्वयं श्रीपंचदशीनामको ग्रंथो विद्वद्वर्यैरुत्तमत्वेन परिगणितः ॥ अस्य ग्रंथस्य हिंदुस्थानीभाषया ब्रह्मनिष्ठैर्महात्मभिः श्रीपंडित-पीतांबरसंज्ञैस्तत्त्वप्रकाशिकानाम्नी व्याख्या कृता-ऽस्ति ॥ तया सहायं ग्रंथः पूर्वमस्माभिर्मुद्रापयित्वा प्रसिद्धिं प्रणीतः ॥ अधुना तु स्वल्पपरिश्रमेण वेदांत-सिद्धांतपरिज्ञानेच्छूनां मुमुक्षूणामुपयोगार्थं तैरेव श्रीपंडितपीतांबरैरयं ग्रंथः संशोध्य मुद्रापणार्थं मह्यं समर्पितः ॥

अस्मिन् ग्रंथे ग्रंथकर्त्रा कवितायां विशिष्टप्रासा-लंकारादिसिद्धौ यत्नमकृत्वा केवलं मुमुक्षूणामात्म-स्वरूपस्य यथार्थापरोक्षज्ञानेनात्मप्राप्तिसिद्ध्यर्थं

श्रुतियुक्त्यादिप्रमाणप्रदर्शनपूर्वकमात्मतत्त्वबोधः कथितोऽस्ति ॥ स एवात्र मुमुक्षूणां मुक्तिसिद्धौ परमं प्रयोजनम् ॥

टीकाग्रंथस्य प्रयोजनं तु मूलग्रंथाभिप्रायज्ञानोपयोगि तत्सटीकपंचदशीग्रंथाल्लभ्यत एव । यैस्तु मुमुक्षुभिः सद्गुरुमुखात्सटीकायाः पंचदश्या अध्ययनं श्रवणं च कृतं तेषां मननादिकाले यथायं मूलग्रंथ एव तात्पर्यसूचनद्वाराऽऽनंददायको भवति तथा न टीकाग्रंथः ॥ टीकाग्रंथस्तु अभ्यासकाले यद्यपि मूलार्थप्रदर्शकस्तथापि मूलरहस्यज्ञानोत्तरं मननाद्यवसरे मननादिकर्तुर्मनोवेगस्य व्यवधानको भवति ॥ अतस्तद्व्यवधानं विनैव तत्त्वबोधोत्सुकानां मूलग्रंथ एवोपयोगीत्यस्माभिः सुव्यक्तकीलकाक्षरैर्मुद्रापयित्वा प्राकाश्यं नीतः ॥ अयं च मुमुक्षूणां चिरकालमपरोक्षब्रह्मानंदरसप्रदो भूयात् ॥

सालेमहंमदात्मजशरीफ

## ॥ ॐ परमात्मने नमः ॥

## ॥ द्वितीयावृत्तिप्रस्तावना ॥

अस्य प्रसिद्धश्रीपंचदशीमूलस्य द्वितीयसंस्करणे तत्र तत्र यत्सुधारणं वृद्धिश्च कृतेस्तः तद्विवरणं अधो दर्शयिष्यते—

॥ १ ॥ **श्लोकानां वृद्ध्यंकाः**— प्रतिपृष्ठमूर्धनि निहितास्तथैव पद्यानामारंभेऽपि दत्ताः संति ॥

॥ २ ॥ **अन्वयस्य वृद्ध्यंकाः**—श्रीसटीकपंचदश्याः द्वितीयसंस्करणं यत्समग्रसंस्कृतटीकया तदनुरोधिभाषाटीकया च सहितं संप्रति मुद्रणावस्थायां वर्तते तस्मिन्येऽन्वयांकाः संति त एव तथैवास्मिन्ग्रंथस्थपद्यवर्तिशब्दोपरि सूक्ष्माक्षरैर्मुद्रिताः संति । तेन यदंकान्वयो यथा विद्यते तेंऽका उपरिनिर्दिष्टश्रीसटीकपंचदश्यालोचनेन शीघ्रमवगताः स्युः ॥

॥ ३ ॥ **वृद्ध्यंकानां सरणिः**— एतद्ग्रंथस्य श्लोकानामारंभे यो वृद्धिगाम्यंको निहितस्तथा श्लोकस्थपदोपर्यपि ये वर्धमाना अन्वयांकाः सूक्ष्माक्षरैर्मुद्रितास्ते मूलादारभ्य यावदंतं प्रतिशतसंख्यापूर्त्युत्तरं पुनरेकद्व्यादिक्रमेणारब्धास्तथापि ते उभयोः पूर्णांकाः प्रतिपृष्ठशिरोदेशे मुद्रिताः संति ॥

उदाहरणम् ६९ पृष्ठोपरि

**१६—तत्त्व[३]निश्चयकामेन न्यायागमविचारिणाम् ।**
**एकैव प्रतिपत्तिः स्यात्सा[६]ऽप्यत्र स्फुटमुच्यते १२२**

एवं चित्रदीपस्थः १२२ श्लोको विद्यते । तत्र श्लोकारंभे यः १६ षोडशोंऽकोऽस्ति स ग्रंथारंभात् ४१६ पद्यमिति ज्ञापयति । तथा "तत्त्व" शब्दोपरि ३ त्रिपरिमतो योंकोऽस्ति सोऽपि मूलादारभ्य १६०३ अंकान्वयं सूचयति । तथा निर्दिष्टपद्योत्तरार्धे "साऽप्यत्र" इतिपदोपरिस्थः ६ अंकः १६०६

तमांकान्वयं लक्षयति इति ज्ञापनायोक्तपृष्ठशिरोभागे [श्लो. ४१६. अ. १६०३] एवं मुद्रितमस्ति ॥

॥४॥ **मुख्यमध्यप्रसंगौ**— संप्रत्यंकनोपक्रांतायाः श्रीसटीकपंचदशीद्वितीयावृत्तेः भाषाविभागे यथा मुख्यमध्यप्रसंगौ स्तस्तथैव संस्कृतटीकायामपि कल्पितास्ते च सर्वत्र स्थूलाक्षरैर्मुख्यः प्रसंगः सूक्ष्माक्षरैर्मध्यः प्रसंग इति ज्ञेयम् ।

दृष्टांतः ६९ पृष्ठोपरि दर्शितवन्मुद्रितमस्ति ।

## ॥ ५ ॥ आत्मतत्त्वविवेचने सर्वमताविरुद्धेश्वरनिर्णयः ॥ ४१६—५०३ ॥

### ॥ १ ॥ ईश्वरत्वस्योपाधिमायावर्णनम् ॥ ४१६—४४६ ॥

अधुना "आत्मतत्त्वविवेचने" इत्यस्यारंभे ॥ ९ ॥ अंकोऽस्ति स चित्रदीपाख्यषष्ठप्रकरणस्य ९ पंचमो मुख्यः प्रसंग इति सूचयति । तथा तदंते योंकोऽस्ति स मुख्यः प्रसंगो वर्धिष्णुक्रमस्य ४१६ श्लोकादारभ्य

५०३ मितावधि श्लोकांतं ज्ञापयति । अस्य पंचम-मुख्यप्रसंगस्याधः सूक्ष्माक्षरीय "ईश्वरतत्त्वस्य" इ-त्यस्यारंभे ॥ १ ॥ योंकोऽस्ति स निर्दिष्टपंचमप्रसं-गस्य प्रथमो मध्यप्रसंग इति सूचयति । तथा स मध्य-प्रसंगो वर्धमानक्रमस्य ४१६ श्लोकादारभ्य ४४६ श्लोकावधि क्रमप्राप्त इति तदंतिमस्थेन ॥ ४१६–४४६ ॥ अनेनांकेनावगम्यते ॥

॥५॥ अनुभूतिप्रकाशसारोद्धारः— इति वि-स्मरवेदांतोपनिषत्सारभूतः अनुभूतिप्रकाशाख्यः पद्या-त्मकः श्रीविद्यारण्यस्वामिप्रणीतो ग्रंथोऽस्ति तदंततो वेदांतनिष्ठोद्धाररूपं २२१ पद्यव्यूहमुद्धृत्य तत् "अनु-भूतिप्रकाशसारोद्धारः" इत्यभिख्ययास्य २४१ पृष्ठात् २६८ पृष्ठावधि निवेशितम् ॥

॥६॥ वेदांतप्रतिपादकाः २० प्रसिद्धग्रंथाः— प्रथितानेकवेदांतग्रंथेभ्य आह्लादजनकं प्रकीर्णश्लोक-

संग्रहमवगुम्फ्य मुद्रितव्यमिति चिरं मनोभिलषितमासीत् तथापि तथाऽकृत्यैव संप्रति तेभ्यो२०ग्रंथेभ्यः सारभूतं पद्यनिचयं निष्कास्यास्य ग्रंथस्य २६९ पृष्ठतः प्रतिपृष्ठमेकैकग्रंथस्य पद्यान्यंकितानि ॥

॥७॥ वेदांतरहस्यम्—यैः श्रीपंचदश्यभ्यस्ता तेऽहर्निशं वेदांतरहस्यस्मृत्या आनंदाय चास्या मूलपंचदश्याः पठनं कुर्वते। अखिलवेदांतग्रंथेषु श्रीपंचदश्येका चूडामणीभूतावरीवर्ति । तथाच वेदांतज्ञानोपयोगिनिखिलविषयाणामाकरभूतेयं पंचदशी।अत एव कतिचन साधवः संन्यासिनः पंडितादयश्च यात्रासमये स्वसमं ग्रंथजातभारासहिष्णवः केवलं पंचदशीमूलपुस्तकं निकटे रक्षंतीति भूतपूर्वानुभवमासीत्। अतोऽस्मिन्पुस्तके अनुभूतिप्रकाशसारोद्धारतः प्रसिद्धान्यवेदांतग्रंथेभ्यश्च संगृहीतपद्यमुक्तासंनिवेशेन गुणग्राहिणामेतत्पुस्तकमतीवाह्लादकारि स्यादिति मनसिकृत्य वर्धितमस्ति ॥

॥८॥ भ्रांतिचित्रम्— ब्रह्मनिष्ठपंडितश्रीपीतांबरजीपुरु-षोत्तमजीविरचितविचारचंद्रोदयस्य चतुर्थावृत्तिः सम्यक्संशोध्य संवर्ध्य च मुद्रितास्ति तस्याः पुटकपृष्ठे यानि भ्रांतिदर्शकानि चित्राणि विद्यंते तान्येवास्य ग्रंथस्य पुटकोपरि स्थापितानि संति। तद्विवरणं च विचारचंद्रोदयचतुर्थसंस्करणप्रस्तावनायां कृतं तत्तत्रैव द्रष्टव्यम् ॥

अस्य ग्रंथस्य पुटपृष्ठे एवं चित्रद्वयमायातं। द्वयोरप्यांतरे रेखे समाने एव तथापि तदुपरितनतिर्यगग्ररेखाद्वयोपाधिवशादसमानं भासत इत्येव भ्रांतिरुत्पद्यत इति ॥

सालेमहंमदात्मजशरीफ

## ॥ श्रीपंचदश्या अनुक्रमणिका ॥

## ॥ ॐ अनुक्रमणिका ॥

ग्रंथनामानि पृष्ठांकाः

# ॥ श्रीपंचदशी ॥

## ॥ प्रसंगदर्शकानुक्रमणिका ॥

### ॥ प्रत्यक्तत्त्वविवेकः ॥ १ ॥

---

## ॥ पंचमहाभूतविवेकः ॥ २ ॥

प्रसंगाः श्लोकांकाः

## ॥ पंचकोशविवेकः ॥ ३ ॥



---

# ॥ द्वैतविवेकः ॥ ४ ॥

प्रसंगाः श्लोकांकाः



---

## ॥ महावाक्यविवेकः ॥ ५ ॥

## ॥ चित्रदीपः ॥ ६ ॥

प्रसंगाः श्लोकांकाः

प्रसंगाः श्लोकांकाः

## ॥ तृप्तिदीपः ॥ ७ ॥

प्रसंगाः श्लोकांकाः

प्रसंगाः श्लोकांकाः

---

## ॥ कूटस्थदीपः ॥ ८ ॥

प्रसंगाः श्लोकांकाः

## ॥ ध्यानदीपः ॥ ९ ॥

---

## ॥ नाटकदीपः ॥ १० ॥

प्रसंगाः श्लोकांकाः

## ॥ ब्रह्मानंदगतयोगानंदः ॥ ११ ॥

---

## ॥ ब्रह्मानंदगतात्मानंदः ॥ १२ ॥

प्रसंगाः  श्लोकांकाः

## ॥ ब्रह्मानंदगताद्वैतानंदः ॥ १३ ॥



---

## ॥ ब्रह्मानंदगतविद्यानंदः ॥ १४ ॥

प्रसंगाः श्लोकांकाः



---

## ॥ ब्रह्मानंदगतविषयानंदः ॥ १९ ॥

॥ ॐतत्सद्ब्रह्मणे नमः ॥

# ॥ श्रीपंचदशी ॥

## ॥ अथ प्रत्यक्तत्त्वविवेकः ॥ १ ॥

१—नमः श्रीशंकरानंदगुरुपादांबुजन्मने ।
सविलासमहामोहग्राहग्रासैककर्मणे ॥ १ ॥
२—तत्पादांबुरुहद्वंद्वसेवानिर्मलचेतसाम् ।
सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते ॥ २ ॥

### ॥ १ ॥ युक्त्या जीवब्रह्मणोरैक्य-प्रतिपादनम् ॥ ३—४२ ॥

#### ॥ १ ॥ नित्यस्वयंप्रकाशसंविदो जाग्रदादिष्वभेदो विषयभेदश्च ॥ ३—७ ॥

३—शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक् ।
ततो विभक्ता तत्संविदैक्यरूप्यान्न भिद्यते ॥३॥

४—तथा स्वप्नेऽत्र वेद्यं तु न स्थिरं जागरे स्थिरम् ।
तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते ॥ ४ ॥
५—सुप्तोत्थितस्य सौषुप्ततमोबोधो भवेत्स्मृतिः ।
सा चावबुद्धविषयाऽवबुद्धं तत्तदा तमः ॥ ५ ॥
६—स बोधो विषयाद्भिन्नो न बोधात्स्वप्नबोधवत् ।
एवं स्थानत्रयेऽप्येका संवित्तद्वद्दिनांतरे ॥ ६ ॥
७—मासाब्दयुगकल्पेषु गतागम्येष्वनकेधा ।
नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा ॥ ७ ॥

॥ २ ॥ संविदेवात्मा चात्मा परमानंदः ॥ ८—१४ ॥

८—इयमात्मा परानंदः परप्रेमास्पदं यतः ।
मानभूवं हि भूयासमिति प्रेमात्मनीक्ष्यते ॥ ८ ॥
९—तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि ।
अतस्तत्परमं तेन परमानंदताऽऽत्मनः ॥ ९ ॥
१०इत्थं सच्चित्परानंद आत्मा युक्त्या तथाविधम् ।
परं ब्रह्म तयोश्चैक्यं श्रुत्यंतेषूपदिश्यते ॥ १० ॥

११—ᵗ⁶ᵗभाने न परं प्रेम भाने न विषये स्पृहा ।
ᵗ⁶²अतो भानेऽप्यभाताऽसौ परमानंदतात्मनः ११

१२—ᵗ⁶⁵अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ।
भानेप्यभानं भानस्य प्रतिबंधेन युज्यते ॥ १२ ॥

१३—ᵗ⁶³प्रतिबंधोऽस्ति भातीति व्यवहारार्हवस्तुनि।
तन्निरस्य विरुद्धस्य तस्योत्पादनमुच्यते ॥ १३ ॥

१४—तस्य हेतुः समानाभिहारः पुत्रध्वनिश्रुतौ।
इहानादिरविद्यैव व्यामोहैकनिबंधनम् ॥ १४ ॥

॥ ३ ॥ प्रकृतिस्वरूपम् ॥ १५—१८ ॥

१५—चिदानंदमयब्रह्मप्रतिबिंबसमन्विता ।
तमोरजःसत्वगुणा प्रकृतिर्द्विविधा च सा ॥ १५ ॥

१६—सत्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते।
मायाबिंबो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥ १६ ॥

१७—अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।
सा कारणशरीरं स्यात्प्राज्ञस्तत्राभिमानवान् १७

॥ ४ ॥ अपंचीकृतपंचमहाभूतोत्पत्तिः ॥ १८—२२ ॥

१८—तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ।
वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे ॥ १८ ॥

१९—सत्वांशैः पंचभिस्तेषां क्रमाद्धींद्रियपंचकम् ।
श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते ॥ १९ ॥

२०—तैरंतःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ।
मनो विमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका २०

२१—रजोंऽशैः पंचभिस्तेषां क्रमात्कर्मेंद्रियाणि तु ।
वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे ॥२१

२२—तैः सर्वैः सहितैःप्राणो वृत्तिभेदात्स पंचधा ।
प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः २२

॥ ५ ॥ सूक्ष्मशरीरस्वरूपम् ॥ २३—२५ ॥

२३—बुद्धिकर्मेंद्रियप्राणपंचकैर्मनसा धिया ।
शरीरं सप्तदशभिः सूक्ष्मं तल्लिंगमुच्यते ॥ २३ ॥

२४—प्राज्ञस्तत्राभिमानेन तैजसत्वं प्रपद्यते ।
हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता ॥ २४ ॥

२५—समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात्।
तदभावात्ततोऽन्ये तु कथ्यंते व्यष्टिसंज्ञया ॥२५॥

॥ ६ ॥ पंचीकरणनिरूपणम् ॥ २६—३० ॥

२६—[४३]तद्भोगाय पुनर्भोग्यभोगायतनजन्मने ।
पंचीकरोति भगवान्प्रत्येकं वियदादिकम् ॥२६॥
२७—[४६]द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात्पंच पंच ते ॥ २७ ॥
२८—[४९]तैरंडस्तत्र भुवनभोग्यभोगाश्रयोद्भवः ।
[५२]हिरण्यगर्भः स्थूलेऽस्मिन्देहे वैश्वानरो भवेत् २८
२९—[५४]तैजसा विश्वतां याता [५७]देवतिर्यङ्नरादयः ।
[५९]ते पराग्दर्शिनः [६२]प्रत्यक्तत्त्वबोधविवर्जिताः ॥२९॥
३०—[६४]कुर्वते कर्म भोगाय कर्म कर्तुं च भुंजते ।
नद्यां कीटा इवाऽऽवर्तादावर्तांतरमाशु ते ।
व्रजंतो जन्मनो जन्म लभंते नैव निर्वृतिम् ॥३०॥

॥ ७ ॥ विश्वानां संसारनिवृत्तिप्रकारः ॥ ३१—३२ ॥

३१—सत्कर्मपरिपाकात्ते करुणानिधिनोद्धृताः ।
प्राप्य तीरतरुच्छायां विश्राम्यंति यथासुखम् ३१
३२—उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ।
पंचकोशविवेकेन लभंते निर्वृतिं पराम् ॥ ३२ ॥

॥ ८ ॥ पंचकोशनिरूपणम् ॥ ३३—३६ ॥

३३-अन्नं प्राणो मनो बुद्धिरानंदश्चेति पंच तोको-
शास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत् ३३
३४-स्यात्पंचीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञकः।
लिंगे तु राजसैः प्राणैः प्राणः कर्मेंद्रियैः सह ३४
३५-सात्त्विकैर्धींद्रियैः साकं विमर्शात्मा मनोमयः।
तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका॥३५॥
३६-कारणे सत्वमानंदमयो मोदादिवृत्तिभिः।तत्त-
त्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत्॥३६॥

॥ ९ ॥ अन्वयव्यतिरेकाभ्यामात्मनो ब्रह्मरूपता ॥३७—४२॥

३७–[४]अन्वयव्यतिरेकाभ्यां पंचकोशविवेकतः ।
स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते ॥ ३७॥

३८–[१३]भाने स्थूलदेहस्य स्वप्ने यद्भानमात्मनः ।
सोऽन्वयोव्यतिरेकस्तद्भानेऽन्यानवभासनम् ३८

३९-[१५]लिंगाभावे सुषुप्तौ स्यादात्मनो भानमन्वयः ।
व्यतिरेकस्तु तद्भाने लिंगस्याभानमुच्यते ॥३९॥

४०-[१८]तद्विवेकाद्विविक्ताःस्युःकोशाःप्राणमनोधियः।
ते हि तत्र गुणावस्थाभेदमात्रात्पृथक्कृताः॥४०॥

४१-[१]सुषुप्त्यभाने भानं तु समाधावात्मनोऽन्वयः।
व्यतिरेकस्त्वात्मभाने सुषुप्त्यनवभासनम् ॥४१॥

४२-[१]यथा मुंजादिषीकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ४२ ॥

## ॥ २ ॥ महावाक्येन जीवब्रह्मणोरैक्य-प्रतिपादनम् ॥ ४३—६५ ॥

### ॥ १ ॥ तत्त्वमसिमहावाक्यार्थः ॥ ४३—५२ ॥

४३–[१]परापरात्मनोरेवं युक्त्या संभावितैकता ।
तत्त्वमस्यादिवाक्यैः सा भागत्यागेन लक्ष्यते ४३

४४–[१३]जगतो यदुपादानं मायामादाय तामसीम् ।
निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा ॥४४॥

४५–[१६]यदा मलिनसत्त्वां तां कामकर्मादिदूषिताम् ।
आदत्ते तत्परं ब्रह्म त्वंपदेन तदोच्यते ॥ ४५ ॥

४६–[१९]त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम् ।
अखंडं सच्चिदानंदं महावाक्येन लक्ष्यते ॥४६॥

४७-[२२]सोऽयमित्यादिवाक्येषु विरोधात्तदिदंतयोः ।
त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा ॥४७॥

४८–[३५]मायाविद्ये विहायैवमुपाधी परजीवयोः ।
अखंडं सच्चिदानंदं परं ब्रह्मैव लक्ष्यते ॥ ४८ ॥

४९-सविकल्पस्य लक्ष्यत्वे लक्ष्यस्य स्यादवस्तुता।
निर्विकल्पस्य लक्ष्यत्वं न दृष्टं न च संभवि॥४९॥

५०-विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्।
आद्ये व्याहतिरन्यत्रानवस्थात्माश्रयादयः॥५०॥

५१-इदं गुणक्रियाजातिद्रव्यसंबंधवस्तुषु ।
समं तेन स्वरूपस्य सर्वमेतदितीष्यताम् ॥५१॥

५२-विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि ।
विकल्पितत्वलक्ष्यत्वसंबंधाद्यास्तु कल्पिताः ॥५२

॥ २ ॥ श्रवणमनननिदिध्यासनलक्षणम् ॥ ५३—५४ ॥

५३-इत्थं वाक्यैस्तदर्थानुसंधानं श्रवणं भवेत् ।
युक्त्या संभावितत्वानुसंधानं मननं तु तत्॥५३॥

५४-ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत् । एकतानत्वमेतद्धि निदिध्यासनमुच्यते ५४

॥ ३ ॥ निर्विकल्पसमाधिनिरूपणम् ॥ ५५—६१ ॥

५५-ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम्।
निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ५५ ॥

९६–[५५]वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः ।
स्मरणादनुमीयंते व्युत्थितस्य समुत्थितात्॥९६॥

९७–[५६]वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि ।
अदृष्टासकृदभ्याससंस्कारसचिवाद्भवेत् ॥ ९७॥

९८-[६१]यथा दीपो निवातस्थ इत्यादिभिरनेकधा ।
भगवानिममेवार्थमर्जुनाय न्यरूपयत् ॥ ९८ ॥

९९–[६४]अनादाविह संसारे संचिताः कर्मकोटयः ।
अनेन विलयं यांति शुद्धो धर्मो विवर्धते ॥९९॥

६०–[६७]धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः ।
[७०]वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ ६० ॥

६१–[७३]अमुना वासनाजाले निःशेषं प्रविलापिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये ॥ ६१ ॥

॥ ४ ॥ उत्तरग्रंथफलितार्थः ॥ ६२—६५ ॥

६२–[७६]वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ॥ ६२ ॥

६३–परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम्।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ ६३॥
६४–अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
संसारकारणाज्ञानतमसश्चंडभास्करः ॥ ६४ ॥
६५–इत्थं तत्त्वविवेकं
विधाय विधिवन्मनः समाधाय ।
विगलितसंसृतिबंधः
प्राप्नोति परं पद नरो न चिरात् ॥ ६५ ॥

॥ इति श्रीपंचदश्यां प्रत्यक्तत्त्वविवेकः ॥ १ ॥

# ॥ अथ पंचमहाभूतविवेकः ॥ २ ॥

६६–सदद्वैतं श्रुतं यत्तत्पंचभूतविवेकतः ।
बोद्धुं शक्यं ततो भूतपंचकं प्रविविच्यते ॥ १ ॥

## ॥ १ ॥ अपंचीकृतपंचमहाभूतानां गुणकार्यवर्णनम् ॥ ६७–८२ ॥

### ॥ १ ॥ आकाशादिगुणकथनम् ॥ ६७—७१ ॥

६७–शब्दस्पर्शौ रूपरसौ गंधो भूतगुणा इमे ।
एकद्वित्रिचतुःपंच गुणा व्योमादिषु क्रमात् ॥२॥

६८-प्रतिध्वनिर्वियच्छब्दो वायौ वीसीति शब्दनम् । अनुष्णाशीतसंस्पर्शो वह्नौ भुगुभुगुध्वनिः ३

६९–उष्णः स्पर्शः प्रभारूपं जले बुलुबुलुध्वनिः ।
शीतः स्पर्शः शुक्लरूपं रसो माधुर्यमीरितम् ॥ ४ ॥

७०–भूमौ कडकडाशब्दः काठिन्यं स्पर्श इष्यते ।
नीलादिकं चित्ररूपं मधुराम्लादिको रसः ॥५॥

॥ २ ॥ पंचज्ञानेंद्रियवर्णनम् ॥ ७१—७४ ॥

७१-सुरभीतरगंधौ द्वौ गुणाः सम्यग्विवेचिताः ।
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चेंद्रियपंचकम् ६
७२-कर्णादिगोलकस्थं तच्छब्दादिग्राहकं क्रमात् ।
सौक्ष्म्यात्कार्यानुमेयं तत्प्रायो धावेद्बहिर्मुखम् ७
७३—कदाचित्पिहिते कर्णे श्रूयते शब्द आंतरः ।
प्राणवायौ जाठराग्नौ जलपानेऽन्नभक्षणे ॥ ८ ॥
७४-व्यज्यंते ह्यांतराः स्पर्शा मीलने चांतरं तमः ।
उद्गारे रसगंधौ चेत्यक्षाणामांतरग्रहः ॥ ९ ॥

॥ ३ ॥ पंचकर्मेंद्रियवर्णनम् ॥ ७५—७६ ॥

७५—पंचोक्त्यादानगमनविसर्गानंदकाः क्रियाः ।
कृषिवाणिज्यसेवाद्याः पंचस्वंतर्भवंति हि ॥ १० ॥
७६-वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः ।
मुखादिगोलकेष्वास्ते तत्कर्मेंद्रियपंचकम् ॥ ११ ॥

॥ ४ ॥ मनोवर्णनम् ॥ ७७—८१ ॥

७७–मनो दशेंद्रियाध्यक्षं हृत्पद्मगोलके स्थितम् ।
तच्चांतःकरणं बाह्येष्वस्वातंत्र्याद्विनेंद्रियैः ॥१२॥

७८–अक्षेष्वर्थार्पितेष्वेतद्गुणदोषविचारकम् ।
सत्वं रजस्तमश्चास्य गुणा विक्रियते हि तैः १३

७९-वैराग्यं क्षांतिरौदार्यमित्याद्याः सत्वसंभवाः ।
कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः १४

८०आलस्यभ्रांतितंद्राद्या विकारास्तमसोत्थिताः।
सात्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः १५

८१–तामसैर्नोभयं किंतु वृथायुःक्षपणं भवेत् ।
अत्राहं प्रत्ययी कर्तेत्येवं लोकव्यवस्थितिः॥१६॥

॥ ५ ॥ उक्तजगतो भूतकार्यतानिश्चयः ॥ ८२ ॥

८२–स्पष्टशब्दादियुक्तेषु भौतिकत्वमतिस्फुटम् ।
अक्षादावपि तच्छास्त्रयुक्तिभ्यामवधार्यताम् ॥१७

## ॥ २ ॥ "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" इति श्रुत्या सत्प्रतिपादनम् ॥ ८३—१११ ॥

### ॥ १ ॥ उक्तश्रुतेरर्थः ॥ ८३—९१ ॥

८३–ऐकादशेंद्रियैर्युक्त्या शास्त्रेणाप्यवगम्यते ।
यावत्किंचिद्भवेदेतदिदंशब्दोदितं जगत् ॥ १८ ॥

८४–इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ।
सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः ॥१९॥

८५–वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षांतरात्सजातीयो विजातीयः शिलादितः २०

८६–तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥२१॥

८७–सतो नावयवाः शंक्यास्तदंशस्यानिरूपणात् ।
नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात् ॥२२॥

८८–नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा ।
न तयोरुद्भवस्तस्मान्निरंशं सद्यथा वियत्॥२३॥
८९–सदंतरं सजातीयं न वैलक्षण्यवर्जनात् ।
नामरूपोपाधिभेदं विना नैव सतो भिदा॥२४॥
९०–विजातीयमसत्तत्तु न खल्वस्तीति गम्यते ।
नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः२५

॥ २ ॥ शून्यवादिपूर्वपक्षस्तत्खंडनं च ॥ ९१—१११ ॥

९१–एकमेवाद्वितीयं सत्सिद्धमत्र तु केचन ।
विह्वला असदेवेदं पुराऽऽसीदित्यवर्णयन्॥२६॥
९२मग्नस्याब्धौ यथाक्षाणि विह्वलानि तथास्यधीः।
अखंडैकरसं श्रुत्वा निःप्रचारा बिभेत्यतः ॥२७॥
९३–गौडाचार्या निर्विकल्पे समाधावन्ययोगि-
नाम् । साकारब्रह्मनिष्ठानामत्यंतं भयमूचिरे २८
९४–अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिभिः ।
योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः २९

९५-भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून्। आहु-
र्माध्यमिकान्भ्रांतानचिंत्येऽस्मिन्सदात्मनि ॥३०
९६-अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३१ ॥
९७-शून्यमासीदिति ब्रूषे सद्योगं वा सदात्मताम्।
शून्यस्य न तु तद्युक्तमुभयं व्याहतत्वतः ॥ ३२ ॥
९८-न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः।
सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथं वद ३३
९९-वियदादेर्नामरूपे मायया सुविकल्पिते।
शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम् ३४
१००-सतोऽपि नामरूपे द्वे कल्पिते चेत्तदा वद।
कुत्रेति निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते॥३५॥
१-सदासीदिति शब्दार्थभेदे वैगुण्यमापतेत्।
अभेदे पुनरुक्तिः स्यान्मैवं लोके तथेक्षणात् ३६
२-कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम्।
इत्यादिवासनाऽऽविष्टं प्रत्यासीत्सदितीरणम् ३७

३—कालाभावे पुरेत्युक्तिः कालवासनया युतम् ।
शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शंक्यते॥ ३८॥
४—चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया।
अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम्॥ ३९॥
५—तदा स्तिमितगंभीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते॥ ४०॥
६—ननु भूम्यादिकं मा भूत्परमाण्वंतनाशतः ।
कथं ते वियतोऽसत्वं बुद्धिमारोहतीति चेत्॥ ४१॥
७—अत्यंतं निर्जगद्व्योम यथा ते बुद्धिमाश्रितम् ।
तथैव सन्निराकाशं कुतो ना श्रयते मतिम्॥ ४२॥
८—निर्जगद्व्योम दृष्टं चेत्प्रकाशतमसी विना ।
क्व दृष्टं किं च ते पक्षे न प्रत्यक्षं वियत्खलु॥ ४३॥
९—सद्वस्तु शुद्धं त्वस्माभिर्निश्चितैरनुभूयते । तूष्णीं-
स्थितौ न शून्यत्वं शून्यबुद्धेश्च वर्ज्जनात्॥ ४४॥
१०-सद्बुद्धिरपि चेन्नास्ति माऽस्त्वस्य स्वप्रभत्वतः।
निर्मनस्कत्वसाक्षित्वात्सन्मात्रं सुगमं नृणाम्॥ ४५

१११–मनोजृंभणराहित्ये यथा साक्षी निराकुलः ।
मायाजृंभणतः पूर्वं सत्तथैव निराकुलम् ॥ ४६ ॥

## ॥३॥ मायाशक्तिवर्णनम् ॥ ११२–१२३ ॥

### ॥ १ ॥ मायालक्षणं तया च द्वैताभावः ॥ ११२—११८ ॥

११२निस्तत्त्वाकार्यगम्यास्यशक्तिर्मायाग्निशक्तिवत्
न हि शक्तिः क्वचित्कैश्चिद्बुध्यते कार्यतः पुरा ४७

११३-न सद्वस्तु सतः शक्तिर्न हि वह्नेः स्वशक्तिता ।
सद्विलक्षणतायां तु शक्तेः किं तत्त्वमुच्यताम् ४८

११४-शून्यत्वमिति चेच्छून्यं मायाकार्यमितीरितम् ।
न शून्यं नापि सद्यादृक्तादृक्तत्त्वमिहेष्यताम् ४९

११५–नासदासीन्नोसदासीत्तदानीं किंत्वभूत्तमः ।
सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात् ॥५०

११६–अत एव द्वितीयत्वं शून्यवन्न हि गण्यते ।
न लोके चैत्रतच्छक्त्योर्जीवितं लिख्यते पृथक् ५१

१७-शक्त्याधिक्ये जीवितं चेद्वर्धते तत्र वृद्धिकृत् ।
न शक्तिः किंतु तत्कार्यं युद्धकृष्यादिकं तथा ५२
१८-सर्वथा शक्तिमात्रस्य न पृथग्गणना क्वचित् ।
शक्तिकार्यं तु नैवास्ति द्वितीयं शंक्यते कथम् ५३

॥ २ ॥ ब्रह्मैकदेशे शक्तेर्वृत्तित्वम् ॥ ११९—१२३ ॥

१९–न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किंत्वेकदेश-
भाक् । घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्तते ५४
२०-पादोऽस्य सर्वा भूतानि त्रिपादस्ति स्वयंप्रभः।
इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः ॥ ५५ ॥
२१-विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।
इति कृष्णोऽर्जुनायाह जगतस्त्वेकदेशताम् ॥ ५६
२२-स भूमिं विश्वतो वृत्वा ह्यत्यतिष्ठद्दशांगुलम् ।
विकारावर्ति चात्रास्ति श्रुतिसूत्रकृतोर्वचः॥५७॥
२३-निरंशेऽप्ययं शमारोप्य कृत्स्नेंऽशे वेति पृच्छतः।
तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी ॥ ५८॥

# ॥ ४ ॥ सतः पंचमहाभूतानां च विवेकः ॥ १२४—१७४ ॥

## ॥ १ ॥ शक्तिकथनप्रयोजनवर्णनम् ॥ १२४ ॥

२४ सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रियाः।
वर्णा भित्तिगता भित्तौ चित्रं नानाविधं यथा ५९

## ॥ २ ॥ सदाकाशयोर्विवेकः ॥ १२५—१४१ ॥

२५ आद्यो विकार आकाशः सोऽवकाशस्वरूपवान्।
आकाशोऽस्तीति सत्तत्त्वमाकाशेऽप्यनुगच्छति ६०

२६-एकस्वभावं सत्तत्त्वमाकाशो द्विस्वभावकः। नाँ-
वकाशः सति व्योम्नि स चैषोऽपि द्वयं स्थितम् ६१

२७-यद्वा प्रतिध्वनिर्व्योम्नो गुणो नासौ सतीक्ष्यते।
व्योम्नि द्वौ सद्ध्वनी तेन सदेकं द्विगुणं वियत् ६२

२८-या शक्तिः कल्पयेद्व्योम सा सद्व्योम्नोरभिन्न-
ताम्। आपाद्य धर्मधर्मित्वं व्यत्ययेनावकल्पयेत् ६३

२९-सतो व्योमत्वमापन्नं व्योम्नःसत्तांतुलौकिकाः।
तार्किकाश्चावगच्छंति मायाया उचितं हि तत् ६४
३०-यद्यथा वर्तते तस्य तथात्वं भाति मानतः।
अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः६५
३१-एवं श्रुतिविचारात्प्राग्यथा यद्वस्तु भासते।
विचारेण विपर्येति ततस्तच्चिंत्यतां वियत्॥६६॥
३२-भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदतः।
वाय्वादिष्वनुवृत्तं सन्न तु व्योमेति भेदधीः॥६७॥
३३-सद्वस्त्वधिकवृत्तित्वाद्धर्मि व्योम्नस्तु धर्मता।
धिया सतः पृथक्कारे ब्रूहि व्योम किमात्मकम् ६८
३४-अवकाशात्मकं तच्चेदसत्तदिति चिंत्यताम्।
भिन्नं सतोऽसच्च नेति वक्षि चेद्व्याहतिस्तव॥६९॥
३५-भातीति चेद्भातु नाम भूषणं मायिकस्य तत्।
यदसद्भासमानं तन्मिथ्या स्वप्नगजादिवत्॥७०
३६-जातिव्यक्ती देहिदेहौ गुणद्रव्ये यथा पृथक्।
वियत्सतोस्तथैवास्तु पार्थक्यं कोऽत्र विस्मयः७१

३७-बुद्धोऽपि भेदोनोचित्तेनिरूढिंयाति चेत्तदा।
अनैकाग्र्यात्संशयाद्वा रूढ्यभावोऽस्य ते वद ७२

३८अप्रमत्तो भव ध्यानादाद्येऽन्यस्मिन्विवेचनम्।
कुरु प्रमाणयुक्तिभ्यां ततो रूढतमो भवेत् ॥७३॥

३९ध्यानान्मानाद्युक्तितोऽपिरूढे भेदे वियत्सतोः।
न कदाचिद्वियत्सत्यं सद्वस्तु छिद्रवन्न च ॥७४॥

४०-ज्ञस्य भाति सदा व्योम निस्तत्त्वोल्लेखपूर्वकम्।
सद्वस्त्वपि विभात्यस्य निश्छिद्रत्वपुरःसरम्॥७५॥

४१-वासनायां प्रवृद्धायां वियत्सत्यत्ववादिनम्।
सन्मात्राबोधयुक्तं च दृष्ट्वा विस्मयते बुधः॥७६॥

॥ ३ ॥ सद्वाय्वोर्विवेकः ॥ १४२—१५१ ॥

४२-एवमाकाशमिथ्यात्वे सत्सत्यत्वे च वासिते।
न्यायेनानेन वाय्वादेः सद्वस्तु प्रविविच्यताम्७७

४३–सद्वस्तुन्येकदेशस्था माया तत्रैकदेशगम्।
वियत्तत्राप्येकदेशगतो वायुः प्रकल्पितः ॥७८॥

[२३] ४४-शोषस्पर्शौगतिर्वेगोवायुधर्मा इमे मताः।त्रैयः स्वभावाः सन्मायाव्योम्नां ये तेऽपि वायुगाः७९
[२७] ४५-वायुरस्तीति सद्भावः सतो वायौ पृथक्कृते। निस्तत्त्वरूपतामायास्वभावो व्योमगो ध्वनिः ८०
[३१] ४६-सतोऽनुवृत्तिः सर्वत्र व्योम्नो नेति पुरेरितम्। व्योमानुवृत्तिरधुना कथं न व्याहतं वचः ॥८१॥
[३३] ४७-छिद्रानुवृत्तिर्नेतीति पूर्वोक्तिरधुना त्वियम्। शब्दानुवृत्तिरेवोक्ता वचसो व्याहतिः कुतः ८२
[३५] ४८-ननु सद्वस्तुपार्थक्यादसत्त्वं चेत्तदा कथम्। अव्यक्तमायावैषम्यादमायामयताऽपि नो॥८३॥
[३७] ४९-निस्तत्त्वरूपतैवात्र मायात्वस्य प्रयोजिका।सा शक्तिकार्ययोस्तुल्या व्यक्ताव्यक्तत्वभेदिनोः ८४
[३९] ५०-सदसत्त्वविवेकस्य प्रस्तुतत्वात्स चिंत्यताम्। असतोऽवांतरो भेद आस्तां तच्चिंतयाऽत्र किम्८५
[४२] ५१-सद्वस्तु ब्रह्म शिष्टोंऽशोवायुर्मिथ्यायथावियत। वासयित्वा चिरं वायोर्मिथ्यात्वं मरुतं त्यजेत् ८६

॥ ४ ॥ सदग्न्योर्विवेकः ॥ १५२—१५६ ॥

५२—[४५]चिंतयेद्वह्निमप्येवं मरुतो न्यूनवर्तिनम् ।
[४७]ब्रह्मांडावरणेष्वेषा न्यूनाधिकविचारणा ॥८७॥

५३-[४९]वायोर्दशांशतो न्यूनो वह्निर्वायौ[५१] प्रकल्पितः ।
[५३]पुराणोक्तं तारतम्यं दशांशैर्भूतपंचके ॥ ८८ ॥

५४-[५५]वह्निरुष्णः प्रकाशात्मा पूर्वानुगतिरत्र[५७] च । [५९]अ-
स्ति वह्निः सनिस्तत्त्वः शब्दवान्स्पर्शवानपि ८९

५५-[६१]सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजो गुणः ।
रूपं तत्र[६३] सतः सर्वमन्यद्बुद्ध्या विविच्यताम् ९०

॥ ५ ॥ सज्जलयोर्विवेकः ॥ १५६—१५८ ॥

५६-[६६]सतो विवेचिते वह्नौ मिथ्यात्वे सति वासिते ।
आपो दशांशतो न्यूनाः कल्पिता इति चिंतयेत् ९१

५७-[६८]सत्यापोऽमूः शून्यतत्त्वाः सशब्दस्पर्शसंयुताः ।
रूपवत्योऽन्यधर्मानुवृत्त्या स्वीयो रसो गुणः ९२

॥ ६ ॥ सत्पृथिव्योर्विवेकः ॥ १५८—१६० ॥

५८-सतो विवेचितास्वप्सु तन्मिथ्यात्वे च वासिते।
भूमिर्दशांशतो न्यूना कल्पिताप्स्विति चिंतयेत् ९३
५९ अस्तिभूस्तत्त्वशून्याऽस्यांशब्दस्पर्शौसरूपकौ।
रसश्च परतो गंधो नैजः सत्ता विविच्यताम् ९४

॥ ७ ॥ सद्भूतकार्यब्रह्मांडादिकयोर्विवेकः प्रपंच-
भानाविरोधश्च ॥ १६०—१६६ ॥

६०-पृथक्कृतायां सत्तायां भूमिर्मिथ्याऽवशिष्यते।
भूमेर्दशांशतो न्यूनं ब्रह्मांडं भूमिमध्यगम् ॥९५॥
६१-ब्रह्मांडमध्ये तिष्ठंति भुवनानि चतुर्दश।
भुवनेषु वसंत्येषु प्राणिदेहा यथायथम् ॥ ९६ ॥
६२-ब्रह्मांडलोकदेहेषु सद्वस्तुनि पृथक्कृते।
असतोऽडादयो भांतु तद्भानेऽपीह का क्षतिः ९७
६३-भूतभौतिकमायानां समत्वेऽत्यंतवासिते।
सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥९८॥

६४–सदद्वैतात्पृथग्भूते द्वैते भूम्यादिरूपिणि ।
तत्तदर्थक्रिया लोके यथा दृष्टा तथैव सा॥९९॥
६५-सांख्यकाणादबौद्धाद्यैर्जगद्भेदो यथा यथा ।
उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेष तथा तथा १००
६६–अवज्ञातं सदद्वैतं निःशंकैरन्यवादिभिः ।
एवं का क्षतिरस्माकं तद्द्वैतमवजानताम् ॥ १०१॥

॥ ८ ॥ द्वैतानादरे फलोपपादनम् ॥ १६७—१७४ ॥

६७-द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत् ।
स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते॥१०२॥
६८एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामंतकालेऽपि ब्रह्म निर्वाणमृच्छति ३
६९–सदद्वैतेऽनृतद्वैते यदन्योऽन्यैक्यवीक्षणम् ।
तस्यांतकालस्तद्भेदबुद्धिरेव न चेतरः ॥ १०४॥
७०यद्वांऽतकालःप्राणस्यवियोगोऽस्तुप्रसिद्धितः।
तस्मिन्कालेऽपि न भ्रांतेर्गतायाः पुनरागमः १०५

७१-नीरोग उपविष्टो वा रुग्णो वा विलुठन्भुवि।
मूर्छितो वा त्यजत्वेष प्राणान्भ्रांतिर्न सर्वथा १०६

७२-दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम्।
परेद्युर्नानधीतः स्यात्तद्वद्विद्या न नश्यति ॥१०७॥

७३-प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना।
न नश्यति न वेदांतात्प्रबलं मानमीक्ष्यते ॥१०८॥

७४-तस्माद्वेदांतसंसिद्धं सदद्वैतं न बाध्यते।
अंतकालेऽप्यतो भूतविवेकान्निर्वृतिः स्थिता १०९

॥ इति श्रीपंचदश्यां पंचमहाभूतविवेकः ॥ २ ॥

# ॥ अथ पंचकोशविवेकः ॥ ३ ॥

७५–गुहाहितं ब्रह्म यत्तत्पंचकोशविवेकतः ।
बोद्धुं शक्यं ततः कोशपंचकं प्रविविच्यते ॥ १ ॥

## ॥ १ ॥ पंचकोशात्मनोर्विवेचनम्

## ॥ १७६–१८४ ॥

### ॥ १ ॥ गुहाशब्दस्य सभेदार्थः ॥ १७६ ॥

७६–देहादभ्यंतरः प्राणः प्राणादभ्यंतरं मनः ।
ततः कर्ता ततो भोक्ता गुहा सेयं परंपरा ॥२॥

### ॥ २ ॥ पंचकोशस्वरूपं तदनात्मता च ॥ १७७–१८४ ॥

७७–पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते ।
देहः सोऽन्नमयोऽनात्मा प्रांक्चोर्ध्वं तदभावतः ३

७८–पूर्वजन्मन्यसन्नेतज्जन्म संपादयेत्कथम् ।
भाविजन्मन्यसत्कर्म न भुंजीतेह संचितम् ॥ ४ ॥

७९–पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः ।
वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ५

८०–अहंतां ममतां देहे गेहादौ च करोति यः ।
कामाद्यवस्थया भ्रांतो नासावात्मा मनोमयः ६

८१- लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ।
चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥७॥

८२–कर्तृत्वकरणत्वाभ्यां विक्रियेतांतरिंद्रियम् ।
विज्ञानमनसी अंतर्बहिश्चैते परस्परम् ॥ ८ ॥

८३–काचिदंतर्मुखा वृत्तिरानंदप्रतिबिंबभाक् ।
पुण्यभोगे भोगशांतौ निद्रारूपेण लीयते ॥ ९ ॥

## ॥ २ ॥ आत्मस्वरूपम् ॥ १८४–२११ ॥

### ॥ १ ॥ आत्मन आनंदरूपता ॥ १८४ ॥

८४कादाचित्कत्वतो नात्मा स्यादानंदमयोऽप्ययं
बिंबभूतो य आनंद आत्मासौ सर्वदा स्थितेः १०

॥ २ ॥ आत्मनो ज्ञानरूपता ॥ १८५—१९६ ॥

८५—ननु देहमुपक्रम्य निद्रानंदांतवस्तुषु ।
मा भूदात्मत्वमन्यस्तु न कश्चिदनुभूयते ॥ ११ ॥
८६—बाढं निद्रादयः सर्वेऽनुभूयंते न चेतरः ।
तथाऽप्येतेऽनुभूयंते येन तं को निवारयेत् ॥१२
८७—स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता ।
ज्ञातृज्ञानांतराभावादज्ञेयो न त्वसत्तया ॥ १३ ॥
८८-माधुर्यादिस्वभावानामन्यत्र स्वगुणार्पिणाम्।
स्वस्मिंस्तदर्पणापेक्षा नो न चास्त्यन्यदर्पकम् १४
८९—अर्पकांतरराहित्येऽप्यस्त्येषां तत्स्वभावता ।
मा भूत्तथाऽनुभाव्यत्वं बोधात्मा तु न हीयते १५
९०—स्वयंज्योतिर्भवत्येष पुरोऽस्माद्भासतेऽखिलात्। तमेव भांतमन्वेति तद्भासा भास्यते जगत् १६
९१—येनेदं जानते सर्वं तत्केनान्येन जानताम् ।
विज्ञातारं केन विद्याच्छक्तं वेद्ये तु साधनम् १७

९२-सं वेत्ति वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता।
विदिताविदिताभ्यां तत्पृथग्बोधस्वरूपकम् १८

९३-बोधेऽप्यनुभवो यस्य न कथंचन जायते।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥१९॥

९४-जिह्वा मेऽस्ति न वेत्युक्तिर्लज्जायै केवलं यथा।
न बुध्यते मया बोधो बोद्धव्य इति तादृशी ॥२०

९५-यस्मिन्यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे।
यद्बोधमात्रं तद्ब्रह्मेत्येवं धीर्ब्रह्मनिश्चयः ॥ २१ ॥

॥ ३ ॥ आत्मनः शून्यताऽभावपूर्विका स्वप्रकाशकता
॥ १९६—२०२ ॥

९६—पंचकोशपरित्यागे साक्षिबोधावशेषतः।
स्वस्वरूपं स एव स्याच्छून्यत्वं तस्य दुर्घटम् २२

९७-अस्ति तावत्स्वयं नाम विवादाविषयत्वतः।
स्वस्मिन्नपि विवादश्चेत्प्रतिवाद्यत्र को भवेत् २३

९८ स्वासत्त्वं तु न कस्मैचिद्रोचते विभ्रमं विना।
अत एव श्रुतिर्बाधं ब्रूते चासत्त्ववादिनः ॥२४॥

१९९—असद्ब्रह्मेति चेद्वेद स्वयमेव भवेदसत्। अतो-
ऽस्य मा भूद्वेद्यत्वं स्वसत्त्वं त्वभ्युपेयताम् ॥२५॥

२००-कीदृक्तर्हीति चेत्पृच्छेदीदृंक्ता नास्ति तत्र हि
यदनीदृगतादृक्च तत्स्वरूपं विनिश्चिनु ॥२६॥

१—अक्षाणां विषयस्त्वीदृक्परोक्षस्तादृगुच्यते।
विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता ॥२७

२—अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम्।
सत्यं ज्ञानमनंतं चेत्यस्तीह ब्रह्मलक्षणम् ॥२८॥

॥ ४ ॥ आत्मनः सत्यरूपता ॥ २०३—२०८ ॥

३—सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः।
बाधः किंसाक्षिको ब्रूहि न त्वसाक्षिक इष्यते २९

४—अपनीतेषु मूर्तेषु ह्यमूर्तं शिष्यते वियत्।
शक्येषु बाधितेष्वंते शिष्यते यत्तदेव तत् ॥३०॥

५—सर्ववाधे न किंचिच्चेन्न किंचित्तदेव तत् ।
भाषा एवात्र भिद्यंते निर्बाधं तावदिष्यते ॥ ३१ ॥

६—अत एव श्रुतिर्बाध्यं बाधित्वा शेषयत्यदः ।
स एष नेति नेत्यात्मेत्यतद्व्यावृत्तिरूपतः ॥ ३२ ॥

७—इदं रूपं तु यद्यावत्तत्त्यक्तुं शक्यतेऽखिलम् ।
अशक्यो ह्यनिदंरूपः स आत्मा बाधवर्जितः ३३

८—सिद्धं ब्रह्मणि सत्यत्वं ज्ञानत्वं तु पुरेरितम् ।
स्वयमेवानुभूतित्वादित्यादिवचनैः स्फुटम् ॥ ३४

॥ ५ ॥ आत्मनोऽनंतरूपता ॥ २०९—२११ ॥

९-न व्यापित्वाद्देशतोऽतो नित्यत्वान्नापिकालतः ।
न वस्तुतोऽपि सर्वात्म्यादानंत्यं ब्रह्मणि त्रिधा ३५

१०—देशकालान्यवस्तूनां कल्पितत्वाच्च मायया ।
न देशादिकृतोऽतोऽस्ति ब्रह्मानंत्यं स्फुटं ततः ३६

## ॥ ३ ॥ जीवब्रह्मणोरभेदताप्रतिपादनम् ॥ २११—२१७ ॥

### ॥ १ ॥ ब्रह्मण उपाधिना जीवेश्वरभावौ ॥ २११—२१५ ॥

११—सत्यं ज्ञानमनंतं यद्ब्रह्म तद्वस्तु तस्य तत् ।
ईश्वरत्वं च जीवत्वमुपाधिद्वयकल्पितम् ॥ ३७ ॥

१२-शक्तिरस्त्यैश्वरी काचित्सर्ववस्तुनियामिका।
आनंदमयमारभ्य गूढा सर्वेषु वस्तुषु ॥ ३८ ॥

१३—वस्तुधर्मा नियम्येरञ्छक्त्या नैव यदा तदा ।
अन्योऽन्यधर्मसांकर्याद्विप्लवेत जगत्खलु ॥ ३९॥

१४-चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा ।
तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ॥ ४० ॥

१५-कोशोपाधिविवक्षायां याति ब्रह्मैव जीवताम्।
पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति ॥४१॥

॥ २ ॥ ब्रह्मणो वास्तवजीवेश्वरत्वाभावः ॥ २१६—२१७ ॥

१६—पुंत्रादेरविवक्षायां न पिता न पितामहः ।
तद्वन्नेशो नापि जीवः शक्तिकोशाविवक्षणे॥४२॥

१७—यं एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयम् ।
ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते॥४३॥

इति श्रीपंचदश्यां पंचकोशविवेकः ॥ ३ ॥

# ॥ अथ द्वैतविवेकः ॥ ४ ॥

१८—ईश्वरेणापि जीवेन सृष्टं द्वैतं प्रपंच्यते ।
विवेके सति जीवेन हेयो बंधः स्फुटीभवेत् ॥१॥

## ॥ १ ॥ ईशजीवयोर्जगत्स्रष्टृत्वम्
## ॥ २१९—२५९ ॥

### ॥ १ ॥ ईश्वरसृष्टद्वैतम् ॥ २१९—२३० ॥

१९—मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
स मायी सृजतीत्याहुः श्वेताश्वतरशाखिनः ॥२॥
२०—आत्मा वा इदमग्रेऽभूत्स ईक्षत सृजा इति ।
संकल्पेनासृजल्लोकान्स एतानिति बह्वृचाः ॥३ ॥
२१-खं वाय्वग्निजलोर्व्योषध्यन्नदेहाः क्रमादमी ।
संभूता ब्रह्मणस्तस्मादेतस्मादात्मनोऽखिलाः ॥४
२२—बहु स्यामहमेवातः प्रजायेयेति कामतः ।
तपस्तप्त्वाऽसृजत्सर्वं जगदित्याह तित्तिरिः ॥५॥

२३–[33]इदमग्रे सदेवासीद्बहुत्वाय तदैक्षत ।
तेजोऽबन्नांडजादीनि ससर्जेति च सामगाः॥६॥

२४–[36]विस्फुलिंगा यथा वह्नेर्जायंतेऽक्षरतस्तथा ।
विविधाश्चिज्जडा भावा इत्याथर्वणिका श्रुतिः ७

२५–[38]जगदव्याकृतं पूर्वमासीद्व्याक्रियताधुना ।
दृश्याभ्यां नामरूपाभ्यां विराडादिषु ते स्फुटे ८

२६–[41]विराण्मनुर्नरो गावः खराश्वाजावयस्तथा ।
पिपीलिकावधि द्वंद्वमिति वाजसनेयिनः ॥ ९ ॥

२७–[43]कृत्वा रूपांतरं जैवं देहे प्राविशदीश्वरः ।
इति ताः श्रुतयः प्राहुर्जीवत्वं[46] प्राणधारणात् १०

२८–[49]चैतन्यं यदधिष्ठानं लिंगदेहश्च यः पुनः ।
चिच्छाया लिंगदेहस्था तत्संघो जीव उच्यते ११

२९-[53]माहेश्वरी तु मायाया तस्या निर्माणशक्तिवत् ।
विद्यते मोहशक्तिश्च[55] तं जीवं मोहयत्यसौ ॥१२॥

३०—[58]मोहादनीशतां प्राप्य मग्नो वपुषि शोचति ।
[61]ईशसृष्टमिदं द्वैतं सर्वमुक्तं समासतः ॥ १३ ॥

॥ २ ॥ जीवसृष्टद्वैतम् ॥ २३१—२३४ ॥

३१—[64]सप्तान्नब्राह्मणे द्वैतं जीवसृष्टं प्रपंचितम् ।
[66]अन्नानि सप्त ज्ञानेन कर्मणाऽजनयत्पिता॥१४॥
३२—[68]मर्त्यान्नमेकं देवान्ने द्वे पश्वन्नं चतुर्थकम् ।
अन्यत्रितयमात्मार्थमन्नानां विनियोजनम्॥१५॥
३३—[71]व्रीह्यादिकं दर्शपूर्णमासौ क्षीरं तथा मनः।
वाक्प्राणाश्चेति सप्तत्वमन्नानामवगम्यताम्॥१६॥
३४—[73]ईशेन यद्यप्येतानि निर्मितानि स्वरूपतः ।
तथापि ज्ञानकर्मभ्यां जीवोऽकार्षीत्तदन्नताम् १७

॥ ३ ॥ उक्तजगतो जीवेशाभ्यां संबंधः ॥ २३५—२४८ ॥

३५—[76]ईशकार्यं जीवभोग्यं जगद्द्वाभ्यां समन्वितम्।
[79]पितृजन्या भर्तृभोग्या यथा योषित्तथेष्यताम्१८
३६—[81]मायावृत्त्यात्मको हीशसंकल्पः साधनं जनौ।
मनोवृत्त्यात्मको जीवसंकल्पो भोगसाधनम् ॥१९

३७–ईशनिर्मितमण्यादौ वस्तुन्येकविधे स्थिते ।
भोक्तृधीवृत्तिनानात्वात्तद्भोगो बहुधेष्यते ॥२०॥

३८-हृष्यत्येको मणिं लब्ध्वा क्रुद्ध्यत्यन्यो ह्यलाभतः ।
पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति ॥२१

३९-प्रियोऽप्रिय उपेक्ष्यश्चेत्याकारा मणिगास्त्रयः ।
सृष्टा जीवैरीशसृष्टं रूपं साधारणं त्रिषु ॥ २२ ॥

४०–भार्या स्नुषा ननांदा च याता मातेत्यनेकधा ।
प्रतियोगिधिया योषिद्भिद्यते न स्वरूपतः ॥२३॥

४१–ननु ज्ञानानि भिद्यंतामाकारस्तु न भिद्यते ।
योषिद्वपुष्यतिशयो न दृष्टो जीवनिर्मितः ॥२४॥

४२–मैवं मांसमयी योषित्काचिदन्या मनोमयी ।
मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ॥२५॥

४३–भ्रांतिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ।
जाग्रन्मानेन मेयस्य न मनोमयतेति चेत् ॥ २६ ॥

४४–बोढं माने तु मेयेन योगात्स्याद्विषयाकृतिः।
भाष्यवार्तिककाराभ्यामयमर्थ उदीरितः ॥ २७॥
४५–मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा।
रूपादीन्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ २८॥
४६-व्यंजको वा यथालोको व्यंग्यस्याकारतामि-
यात्। सर्वार्थव्यंजकत्वाद्धीरर्थाकारा प्रदृश्यते २९
४७–मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति तत्।
मेयाभिसंगतं तच्च मेयाऽऽभत्वं प्रपद्यते ॥ ३०॥
४८–सत्येवं विषयौ द्वौ स्तो घटौ मृन्मयधीमयौ।
मृन्मयो मानमेयः स्यात्साक्षिभास्यस्तु धीमयः ३१

॥ ४ ॥ जीवसृष्टद्वैतस्य बंधहेतुता ॥ २४९—२५९ ॥

४९–अन्वयव्यतिरेकाभ्यां धीमयो जीवबंधकृत्।
सत्यस्मिन्सुखदुःखेस्तस्तस्मिन्नसति न द्वयम् ३२
५०–असत्यपि च बाह्यार्थे स्वप्नादौ बद्ध्यते नरः।
समाधिसुप्तिमूर्च्छासु सत्यप्यस्मिन्न बद्ध्यते ॥३३

५१–दूरदेशं गते पुत्रे जीवत्येवात्र तत्पिता ।
विप्रलंभकवाक्येन मृतं मत्वा प्ररोदिति ॥ ३४ ॥

५२-मृतेऽपि तस्मिन्वार्तायामश्रुतायां न रोदिति ।
अतः सर्वस्य जीवस्य वंधकृन्मानसं जगत् ॥ ३५ ॥

५३-विज्ञानवादोबाह्यार्थवैयर्थ्यात्स्यादिहेतिचेत् ।
नं हृद्याकारमाधातुं वाह्यस्यापेक्षितत्वतः ॥ ३६ ॥

५४–वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे ।
प्रयोजनमपेक्षंते न मानानीति हि स्थितिः ॥ ३७ ॥

५५–वंधश्चेन्मानसं द्वैतं तन्निरोधेन शाम्यति ।
अभ्यसेद्योगमेवातो ब्रह्मज्ञानेन किं वद ॥ ३८ ॥

५६–तात्कालिकद्वैतशांतावप्यागामिजनिक्षयः ।
ब्रह्मज्ञानं विना न स्यादिति वेदांतडिंडिमः ३९

५७–अनिवृत्तेऽपीशसृष्टे द्वैते तस्य मृषात्मताम् ।
बुद्ध्वा ब्रह्माद्वयं बोद्धुं शक्यं वस्त्वैक्यवादिनः ४०

५८–[62]प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः ।
विरोधिद्वैताभावेऽपि न शक्यं बोद्धुमद्वयम् ॥४१

५९–[63]अबाधकं साधकं च द्वैतमीश्वरनिर्मितम् ।
अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥४२॥

## ॥ २ ॥ जीवद्वैतस्य भेदपूर्वकत्याज्यत्वम्

## ॥ २६०–२८६ ॥

### ॥ १ ॥ जीवकृतशास्त्रीयद्वैतस्य व्यवस्थापूर्वकग्रहणत्यागौ ॥ २६०—२६५ ॥

६०–[64]जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा ।
[65]उपाददीत शास्त्रीयमातत्त्वस्यावबोधनात् ॥४३॥

६१-[66]आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ।
[67]बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥४४॥

६२-[68]शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनःपुनः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥४५॥

६३—ग्रंथमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रंथमशेषतः ॥४६॥
६४—तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्
६५—तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ।
यच्छेद्वाङ्मनसी प्राज्ञ इत्याद्याः श्रुतयः स्फुटाः४८

॥ २ ॥ जीवकृतद्विविधाशास्त्रीयद्वैतयोः स्वरूपं त्यागप्रयोजनं च ॥ २६६—२७० ॥

६६—अशास्त्रीयमपि द्वैतं तीव्रं मंदमिति द्विधा ।
कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत् ॥४९॥
६७—उभयं तत्त्वबोधात्प्राङ्निवार्यं बोधसिद्धये ।
शमः समाहितत्वं च साधनेषु श्रुतं यतः ॥५०॥
६८—बोधादूर्ध्वं च तद्धेयं जीवन्मुक्तिप्रसिद्धये ।
कामादिक्लेशबंधेन युक्तस्य न हि मुक्तता ॥५१॥
६९-जीवन्मुक्तिरियं माभूज्जन्माभावे त्वहं कृती।
तर्हिजन्मापि तेऽस्त्वेवस्वर्गमात्रात्कृती भवान् ५२

७०–क्षयातिशयदोषेण स्वर्गो हेयो यदा तदा ।
स्वयं दोषतमात्मायं कामादिः किं न हीयते ॥९३

॥ ३ ॥ जीवकृततीव्राशास्त्रीयद्वैतस्यानर्थहेतुत्वेन त्याज्यता ॥ २७१—२७५ ॥

७१–तत्त्वं बुद्ध्वापि कामादीन्निःशेषं न जहासि चेत् । यथेष्टाचरणं ते स्यात्कर्मशास्त्रातिलंघिनः ९४

७२–बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥९९ ॥

७३बोधात्पुरा मनोमात्रदोषात्क्लिश्नास्यथाधुना ।
अशेषलोकनिंदा चेत्यहो ते बोधवैभवम् ॥ ९६ ॥

७४-विड्वराहादितुल्यत्वंमाकांक्षीस्तत्त्वविद्भवान् ।
सर्वधीदोषसंत्यागाल्लोकैः पूज्यस्व देववत् ॥९७॥

७५-काम्यादिदोषदृष्ट्याद्याः कामादित्यागहेतवः ।
प्रसिद्धा मोक्षशास्त्रेषु तानन्विष्य सुखी भव ९८

॥ ४ ॥ जीवकृतमंदाशास्त्रीयद्वैतत्याज्यता
तत्त्यागोपायश्च ॥ २७६—२८६ ॥

७६-त्यज्यतामेष कामादिर्मनोराज्ये तु का क्षतिः ।
अशेषदोषवीजत्वात्क्षतिर्भगवतेरिता ॥ ५९ ॥
७७—ध्यायतो विषयान्पुंसः संगस्तेषूपजायते । सं-
गात्संजायते कामः कामात्क्रोधोऽभिजायते ६०
७८—शक्यं जेतुं मनोराज्यं निर्विकल्पसमाधितः ।
सुसंपादः क्रमात्सोऽपि सविकल्पसमाधिना ६१
७९—वुद्धतत्त्वेन धीदोषशून्येनैकांतवासिना ।
दीर्घं प्रणवमुच्चार्य मनोराज्यं विजीयते ॥ ६२ ॥
८०-जिते तस्मिन्वृत्तिशून्यं मनस्तिष्ठति मूकवत् ।
एतत्पदं वसिष्ठेन रामाय वहुधेरितम् ॥ ६३ ॥
८१-दृश्यं नास्तीति वोधेन मनसो दृश्यमार्जनम् ।
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ६४ ॥
८२—विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ ६५ ॥

४९
८३-विक्षिप्यते कदाचिद्धीः कर्मणा भोगदायिना।
पुनः समाहिता सा स्यात्तदैवाभ्यासपाटवात्६६

५२
८४-विक्षेपो यस्य नास्त्यस्य ब्रह्मवित्त्वं न मन्यते ।
ब्रह्मैवायमिति प्राहुर्मुनयः पारदर्शिनः ॥ ६७ ॥
८५-दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम् ६८

५७
८६-जीवन्मुक्तेः परा काष्ठा जीवद्वैतविवर्जनात्।
लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् ॥६९॥

इति श्रीपंचदश्यां द्वैतविवेकः ॥ ४ ॥

# ॥ अथ महावाक्यविवेकः ॥ ५ ॥

## ॥ १ ॥ ऋग्वेदस्यैतरेयोपनिषद्गतप्रज्ञानं ब्रह्मेति महावाक्यार्थः ॥२८७–२८८॥

### ॥ १ ॥ प्रज्ञानपदस्यार्थः ॥ २८७ ॥

८७–[६०]येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितम् ॥ १॥

### ॥ २ ॥ ब्रह्मपदस्यार्थो वाक्यार्थश्च ॥ २८८ ॥

८८–[६३]चतुर्मुखेंद्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मा[६६]तः प्रज्ञानं ब्रह्म मय्यपि ॥ २ ॥

## ॥ २ ॥ यजुर्वेदस्य बृहदारण्यकोपनिषद्ग- ताहं ब्रह्मास्मीति महावाक्यार्थः ॥ २८९—२९० ॥

### ॥ १ ॥ अहंपदस्यार्थः ॥ २८९ ॥

८९[६]परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥३॥

### ॥ २ ॥ ब्रह्मपदस्यार्थोऽस्मिपदस्यार्थेन वाक्यार्थश्च ॥ २९० ॥

९०—स्वतः[२] पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः।
अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥४॥

## ॥ ३ ॥ सामवेदस्य छांदोग्योपनिषद्गतत- त्त्वमसीति महावाक्यार्थः॥२९१—२९२॥

### ॥ १ ॥ तत्पदस्यार्थः ॥ २९१ ॥

९१—एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुराधुनाऽप्यस्य तादृक्त्वं तदितीर्यते ॥५॥

॥ २ ॥ त्वंपदस्यार्थोऽसिपदस्यार्थेन च वाक्यार्थः ॥ २९२ ॥

९२–[८]श्रोतुर्देहेंद्रियातीतं वस्त्वत्र त्वंपदेरितम् ।
[९]एकता ग्राह्यतेऽसीति [१०]तदैक्यमनुभूयताम् ॥६॥

## ॥ ४ ॥ अथर्वणवेदस्य मांडूक्योपनिषद्गतायमात्मा ब्रह्मेति महावाक्यार्थः ॥ २९३–२९४ ॥

॥ १ ॥ अयमात्मनोः पदयोरर्थौ ॥ २९३ ॥

९३–[१]स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
[१३]अहंकाराऽऽदिदेहांतात्प्रत्यगात्मेति गीयते ॥७॥

॥ २ ॥ ब्रह्मपदस्यार्थ ऐक्यलक्षणवाक्यार्थश्च ॥ २९४ ॥

९४–[१६]दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन [१९]तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥

इति श्रीपंचदश्यां महावाक्यविवेकः ॥ ५ ॥

# ॥ अथ चित्रदीपः ॥ ६ ॥

## ॥ १ ॥ आरोपितजगत्स्थितिर्ज्ञानेन च तन्निवृत्तिप्रकारः ॥ २९५—३१० ॥

### ॥ १ ॥ जगदारोपे दृष्टांतदार्ष्टांतयोरवस्था-चतुष्टयम् ॥ २९५—२९८ ॥

९५—यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् ।
परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् ॥ १ ॥

९६—यथा धौतो घट्टितश्च लांछितो रंजितः पटः ।
चिदंतर्यामी सूत्रात्मा विराडात्मा तथेर्यते ॥ २ ॥

९७स्वतःशुभ्रोऽत्रंधौतःस्याद्धट्टितोऽन्नविलेपनात
मष्याकारैर्लांछितः स्याद्रंजितो वर्णपूरणात् ॥३॥

९८—स्वतश्चिदंतर्यामी तु मायावी सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते परः॥४॥

### ॥ २ ॥ चिदारोपितचित्रवर्णनम् ॥ २९९—३०३ ॥

९९ब्रह्माद्यास्तंबपर्यंताः प्राणिनोऽत्र जडा अपि ।
उत्तमाधमभावेन वर्तंते पटचित्रवत् ॥ ५ ॥

३०० चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् । चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः६

१–पृथक्पृथक्चिदाभासाश्चैतन्याध्यस्तदेहिनाम् । कल्प्यंते जीवनामानो बहुधा संसरंत्यमी ॥ ७ ॥

२–वस्त्राभासस्थितान्वर्णान्यद्वदाधारवस्त्रगान् । वदंत्यज्ञास्तथा जीवसंसारं चिद्गतं विदुः ॥ ८ ॥

३–चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्यते । सृष्टिस्थमृत्तिकादीनां चिदाभासस्तथा न हि॥९॥

॥ ३ ॥ अविद्यास्वरूपपूर्वकं साधनसहितं तन्निवर्तक-विद्यास्वरूपम् ॥ ३०४—३१० ॥

४–संसारः परमार्थोऽयं संलग्नः स्वात्मवस्तुनि । इति भ्रांतिरविद्या स्याद्विद्ययैषा निवर्तते ॥१०॥

५–आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः। इति बोधो भवेद्विद्या लभ्यतेऽसौ विचारणात्११

६–सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः । जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥१२॥

७—³¹नाप्रतीतिस्तयोर्बाधः किंतु मिथ्यात्वनिश्चयः।
नो चेत्सुषुप्तिमूर्च्छादौ मुच्येतायत्नतो जनः॥१३॥
८—³²परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः।
न जगद्विस्मृतिर्नो चेज्जीवन्मुक्तिर्न संभवेत्॥१४॥
९—³³परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा।
तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते॥१५॥
१०—³⁴अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत्।
अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते॥१६॥

## [ आत्मतत्त्वविवेचनम् ३११—५०३]

### ॥ २ ॥ आत्मतत्त्वविवेचने जीवकूटस्थ-योर्विवेचनम् ॥ ३११—३५२ ॥

#### ॥ १ ॥ दृष्टांतभूताकाशचेतनयोर्भेदः ॥ ३११—३१७ ॥

११—³⁵तत्साक्षात्कारसिद्ध्यर्थमात्मतत्त्वं विविच्यते।
येनायं सर्वसंसारात्सद्य एव विमुच्यते ॥१७॥

१२–कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ।
घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा॥१८॥

१३–घटावच्छिन्नखे नीरं यत्तत्र प्रतिबिंबितः ।
साभ्रनक्षत्र आकाशो जलाकाश उदीर्यते॥१९॥

१४–महाकाशस्य मध्ये यन्मेघमंडलमीक्ष्यते ।
प्रतिबिंबतया तत्र मेघाकाशो जले स्थितः॥२०॥

१५–मेघांशरूपमुदकं तुषाराकारसंस्थितम् ।
तत्र खप्रतिबिंबोऽयं नीरत्वादनुमीयते ॥ २१ ॥

१६–अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ।
कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते ॥२२॥

१७–कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिंबकः ।
प्राणानां धारणाज्जीवः संसारेण स युज्यते २३

॥ २ ॥ जीवकूटस्थयोरन्योऽन्याध्यासः ॥ ३१८—३३१ ॥

१८-जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहितः ।
तथाजीवेनकूटस्थःसोऽन्योऽन्याध्यासउच्यते २४

१९–अयं जीवो न कूटस्थं विविनक्ति कदाचन।
अनादिरविवेकोऽयं मूलाऽविद्येति गम्यताम् २५

२०-विक्षेपावृत्तिरूपाभ्यां द्विधाऽविद्या व्यवस्थिता
न भाति नास्ति कूटस्थ इत्यापादनमावृतिः २६

२१–अज्ञानी विदुषा पृष्टः कूटस्थं न प्रबुध्यते ।
न भाति नास्ति कूटस्थ इति बुद्ध्वा वदत्यपि २७

२२-स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः।
इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ ॥ २८॥

२३–स्वानुभूतावविश्वासे तर्कस्याप्यनवस्थितेः ॥
कथं वा तार्किकंमन्यस्तत्त्वनिश्चयमाप्नुयात् ॥२९॥

२४–बुद्ध्यारोहाय तर्कश्चेदपेक्षेत तथा सति ।
स्वानुभूत्यनुसारेण तर्क्यतां मा कुतर्क्यताम् ३०

२५–स्वानुभूतिरविद्यायामावृतौ च प्रदर्शित
अतः कूटस्थचैतन्यमविरोधीति तर्क्यताम् ॥

२६—तच्चेद्विरोधि केनेयमावृतिर्ह्यनुभूयताम्। [2]विवेकस्तु विरोध्यस्यास्तत्त्वज्ञानिनि दृश्यताम् ॥३२॥
२७—अविद्यावृतकूटस्थे देहद्वययुता चितिः।
शुक्तौ रूप्यवदध्यस्ता विक्षेपाध्यास एव हि ३३
२८—इदंमंशश्च सत्यत्वं शुक्तिगं रूप्य ईक्ष्यते।
स्वयंत्वं वस्तुता चैवं विक्षेपे वीक्ष्यतेऽन्यगम् ३४
२९—[3]नीलपृष्ठत्रिकोणत्वं यथा शुक्तौ तिरोहितम्।
असंगानंदताद्येवं कूटस्थेऽपि तिरोहितम् ॥३५॥
३०—आरोपितस्य दृष्टांते रूप्यं नाम यथा तथा।
कूटस्थाध्यस्तविक्षेपनामाहमिति निश्चयः ॥ ३६ ॥
३१—इदंमंशं स्वतः पश्यन्रूप्यमित्यभिमन्यते।
तथा स्वं च स्वतः पश्यन्नहमित्यभिमन्यते॥३७॥

॥ २ ॥ स्वयमात्मशब्दार्थाभेदसहितः कूटस्थ-
चिदाभासयोर्भेदः ॥ ३३२—३५३ ॥

३२—इदंत्वरूप्यते भिन्ने स्वत्वाहंते तथेष्यताम्।
अविद्यान्यं च विशेषश्च उभयत्रापि गम्यते ॥ ३८ ॥

३३–देवदत्तः स्वयं गच्छेत्त्वं वीक्षस्व स्वयं तथा ।
अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते ॥ ३९ ॥

३४–इदं रूप्यमिदं वस्त्रमिति यद्वदिदं तथा ।
असौ त्वमहमित्येषु स्वयमित्यभिमन्यते ॥ ४० ॥

३५–अहंत्वाद्भिद्यतां स्वत्वं कूटस्थे तेन किं तव ।
स्वयं शब्दार्थ एवैष कूटस्थ इति मे भवेत् ॥ ४१ ॥

३६–अन्यत्ववारकं स्वत्वमिति चेदन्यवारणम् ।
कूटस्थस्यात्मतां वक्तुरिष्टमेव हि तद्भवेत् ॥ ४२ ॥

३७-स्वयमात्मेति पर्यायौ तेन लोके तयोः सह ।
प्रयोगो नास्त्यतः स्वत्वमात्मत्वं चान्यवारकम् ४३

३८-घटः स्वयं न जानातीत्येवं स्वत्वं घटादिषु ।
अचेतनेषु दृष्टं चेद्दृश्यतामात्मसत्त्वतः ॥ ४४ ॥

३९–चेतनाचेतनभिदा कूटस्थात्मकृता न
किंतु बुद्धिकृताभासकृतैवेत्यवगम्यताम् ॥ा ५९

४०यथा चेतन आभासः कूटस्थे भ्रांतिकल्पितः।
अचेतनो घटादिश्च तथा तत्रैव कल्पितः ॥ ४६ ॥

४१–तत्तेदंते अपि स्वत्वमिव त्वमहमादिषु।
सर्वत्रानुगते तेन तयोरप्यात्मतेति चेत् ॥ ४७ ॥

४२–ते आत्मत्वेऽप्यनुगते तत्तेदंते ततस्तयोः।
आत्मत्वं नैव संभाव्यं सम्यक्त्वादेर्यथा तथा ४८

४३–तत्तेदंते स्वताऽन्यत्वे त्वंताऽहंते परस्परम्।
प्रतिद्वंद्वितया लोके प्रसिद्धे नास्ति संशयः ॥४९

४४–अन्यतायाः प्रतिद्वंद्वी स्वयं कूटस्थ इष्यताम्।
त्वंतायाःप्रतियोग्येषोऽहमित्यात्मनिकल्पितः५०

ते४५–अहंतास्वत्वयोर्भेदे रूप्यतेदंतयोरिव।
स्पष्टेऽपि मोहमापन्ना एकत्वं प्रतिपेदिरे ॥ ५१ ॥

४६–तादात्म्याध्यासएवात्रपूर्वोक्ताविद्ययाकृतः।
अविद्यायां निवृत्तायां तत्कार्यं विनिवर्तते॥५२

४७–अविद्यावृत्तितादात्म्ये विद्ययैव विनश्यतः।
विक्षेपस्य स्वरूपं तु प्रारब्धक्षयमीक्षते ॥ ५३ ॥

४८–उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्षते ।
इत्याहुस्तार्किकास्तद्वदस्माकं किन्न संभवेत् ५४

४९–तंतूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः।
भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम् ५५

५०–विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ।
श्रुतियुक्त्यनुभूतिभ्यो वदतां किन्नु दुःशकम् ५६

५१ आस्तां दुस्तार्किकैः साकं विवादः प्रकृतं ब्रुवे ।
स्वाहमोः सिद्धमेकत्वं कूटस्थपरिणामिनोः ॥५७

५२–भ्राम्यंते पंडितंमन्याः सर्वे लौकिकतैर्थिकाः।
अनादृत्य श्रुतिं मौर्ख्यात्केवलां युक्तिमाश्रिताः ५८

५३–पूर्वापरपरामर्शविकलास्तत्र केचन ।
वाक्याभासान्स्वस्वपक्षे योजयंत्यप्यलज्जया ५९

## ॥ ३ ॥ आत्मतत्त्वविवेचने आत्मनि विवादः ॥ ३५४—३९५ ॥

### ॥ १ ॥ आत्मस्वरूपे विवादः ॥ ३५४—३७१ ॥

५४–कूटस्थादिशरीरांतसंघातस्यात्मतां जगुः ।
लोकायताः पामराश्च प्रत्यक्षाभासमाश्रिताः ६०

५५–श्रौतीकर्तुं स्वपक्षं ते कोशमन्नमयं तथा ।
विरोचनस्य सिद्धांतं प्रमाणं प्रतिजज्ञिरे ॥६१॥

५६–जीवात्मनिर्गमे देहमरणस्यात्र दर्शनात् ।
देहातिरिक्त एवात्मेत्याहुर्लोकायताः परे ॥६२॥

५७–प्रत्यक्षत्वेनाभिमताहंधीर्देहातिरेकिणम् ।
गमयेदिंद्रियात्मानं वच्मीत्यादिप्रयोगतः ॥६३॥

५८–वागादीनामिंद्रियाणां कलहः श्रुतिषु श्रुतः ।
तेन चैतन्यमेतेषामात्मत्वं तत एव हि ॥ ६४ ॥

५९–हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ।
चक्षुराद्यक्षलोपेऽपि प्राणसत्त्वे तु जीवति ॥६५॥

६०–प्राणोजागर्तिसुप्तेऽपिप्राणश्रैष्ठ्यादिकंश्रुतम्।
कोशः प्राणमयः सम्यग्विस्तरेण प्रपंचितः ६६

६१–मन आत्मेति मन्यंत उपासनपरा जनाः।
प्राणस्याभोक्तृता स्पष्टा भोक्तृत्वं मनसस्ततः ६७

६२–मन एव मनुष्याणां कारणं वंधमोक्षयोः।
श्रुतो मनोमयः कोशस्तेनात्मेतीरितं मनः॥ ६८॥

६३–विज्ञानमात्मेति पर आहुः क्षणिकवादिनः।
यतो विज्ञानमूलत्वं मनसो गम्यते स्फुटम् ६९

६४–अहंवृत्तिरिदंवृत्तिरित्यंतःकरणं द्विधा।
विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत्॥ ७०॥

६५–अहंप्रत्ययवीजत्वमिदंवृत्तेरिति स्फुटम्।
अविदित्वा स्वमात्मानं वाह्यं वेत्ति न तु कचित् ७१

६६–क्षणे क्षणे जन्मनाशावहंवृत्तेर्मितौ यतः।
विज्ञानं क्षणिकं तेन स्वप्रकाशं स्वतो मितेः ७२

६७–विज्ञानमयकोशोऽयं जीव इत्यागमा जगुः ।
सर्वसंसार एतस्य जन्मनाशसुखादिकः ॥ ७३ ॥
६८–विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् ।
अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुः ७४
६९–असदेवेदमित्यादाविदमेव श्रुतं ततः ।
ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रांतिप्रकल्पितम् ॥ ७५ ॥
७०–निरधिष्ठानविभ्रांतेरभावादात्मनोऽस्तिता ।
शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते७६
७१–अन्यो विज्ञानमयत आनंदमय आंतरः ।
अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनम् ॥ ७७ ॥

॥ २ ॥ आत्मपरिमाणे विवादः ॥ ३७२—३८० ॥

७२–अणुर्महान्मध्यमो वेत्येवं तत्रापि वादिनः ।
बहुधा विवदंते हि श्रुतियुक्तिसमाश्रयात् ॥७८॥
७३–अणुं वदंत्यांतरालाः सूक्ष्मनाडीप्रचारतः ।
रोम्णः सहस्रभागेन तुल्यासु प्रचरत्ययम् ॥७९॥

७४-[६४]अणोरणीयानेषोऽणुः सूक्ष्मात्सूक्ष्मतरं त्विति।
अणुत्वमाहुः श्रुतयः शतशोऽथ सहस्रशः॥ ८०॥

७५-[६३]वालाग्रशतभागस्य शतधा कल्पितस्य च ॥
भागो जीवः स विज्ञेय इति चाहापरा श्रुतिः८१

७६-[६५]दिगंबरा मध्यमत्वमाहुरा[६७]पादमस्तकम् ।
चैतन्यव्याप्तिसंदृष्टेरा[६९]नखाग्रश्रुतेरपि ॥ ८२ ॥

७७-[६७]सूक्ष्मनाडीप्रचारस्तु सूक्ष्मैरवयवैर्भवेत् ।
स्थूलदेहस्य हस्ताभ्यां कंचुकप्रतिमोकवत् ॥८३॥

७८-[६८]न्यूनाधिकशरीरेषु प्रवेशोऽपि गमागमैः ।
आत्मांशानां भवे[७६]त्तेन मध्यमत्वं विनिश्चितम् ८४

७९-[६९]सांशस्य घटवन्नाशो भवत्येव [७०]तथा सति ।
कृतनाशाकृताभ्यागमयोः को वारको भवेत् ८५

८०-[६३]तस्मादात्मा महानेव नैवाणुर्नापि मध्यमः।
[७१]आकाशवत्सर्वगतो निरंशः श्रुतिसंमतः ॥८६॥

॥ ३ ॥ आत्मविशेषरूपे विवादः ॥ ३८१—३९५ ॥

८१–ईत्युक्त्वा तद्विशेषे तु बहुधा कलहं ययुः ।
अचिद्रूपोऽथ चिद्रूपश्चिदचिद्रूप इत्यपि ॥ ८७॥

८२-प्रांभाकरास्तार्किकाश्चप्राहुरस्याचिदात्मताम्।
आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः ॥८८॥

८३–ईच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखासुखे ।
तत्संस्काराश्च तस्यैते गुणाश्चितिवदीरिताः ८९

८४-आत्मनो मनसा योगे स्वादृष्टवशतो गुणाः ।
जायंतेऽथ प्रलीयंते सुषुप्तेऽदृष्टसंक्षयात् ॥ ९० ॥

८५–चितिमत्वाच्चेतनोऽयमिच्छाद्वेषप्रयत्नवान् ।
स्याद्धर्माधर्मयोः कर्ता भोक्ता दुःखादिमत्त्वतः९१

८६-यथाऽत्र कर्मवशतः कादाचित्कं सुखादिकम्।
तथा लोकांतरे देहे कर्मणेच्छादि जन्यते ॥९२॥

८७–एवं च सर्वगस्यापि संभवेतां गमागमौ ।
कर्मकांडः समग्रोऽत्र प्रमाणमिति तेऽवदन्॥९३॥

८८—[१०]आनंदमयकोशो यः सुषुप्तौ परिशिष्यते।
अस्पष्टचित्स आत्मैषां पूर्वकोशोऽस्य ते गुणाः॥९४॥
८९—[१३]गूढं चैतन्यमुत्प्रेक्ष्य जडबोधस्वरूपताम्।
आत्मनो ब्रुवते भाट्टाश्चिद्[१६]उत्प्रेक्षोत्थितस्मृतेः॥९५॥
९०—[१९]जडो भूत्वा तदास्वाप्समिति जाड्यस्मृतिस्त-
दा। विना जाड्यानुभूतिं न कथंचिदुपपद्यते॥९६॥
९१—[२२]द्रष्टुर्दृष्टेरलोपश्च श्रुतः सुप्तौ ततस्त्वयम्।
अप्रकाशप्रकाशाभ्यामात्मा खद्योतवद्युतः॥९७॥
९२—[२५]निरंशस्योभयात्मत्वं न कथंचिद्घटिष्यते।
तेन चिद्रूप एवात्मेत्याहुः सांख्या विवेकिनः॥९८॥
९३-[२७]जाड्यांशः प्रकृते रूपं विकारि त्रिगुणं च तत्।
[३०]चितो भोगापवर्गार्थं प्रकृतिः सा प्रवर्तते॥९९॥
९४—[३३]असंगायाश्चितेर्बंधमोक्षौ भेदाग्रहान्मतौ।
बंध[३४]मुक्तिव्यवस्थार्थं पूर्वेषामिव चिद्भिदा॥१००॥
९५—[३६]महतः परमव्यक्तमिति प्रकृतिरुच्यते।
श्रुतावसंगता तद्वदसंगो हीत्यतः स्फुटा॥१०१॥

## ॥ ४ ॥ आत्मतत्त्वविवेचने ईश्वरस्वरूपे विवादः ॥ ३९६—४१५ ॥

### ॥ १ ॥ अंतर्यामितो विराट्पर्यंत ईश्वरे विवादः॥३९६—४०८॥

९६-चित्सन्निधौ प्रवृत्तायाः प्रकृतेर्हि नियामकम्।
ईश्वरं ब्रुवते योगाः सं जीवेभ्यः परः श्रुतः१०२
९७-प्रधानक्षेत्रज्ञपतिर्गुणेश इति हि श्रुतिः ।
आरण्यके संभ्रमेण ह्यंतर्याम्युपपादितः ॥१०३॥
९८-अत्रापि कलहायंते वादिनः स्वस्वयुक्तिभिः ।
वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरंति हि१०४
९९—क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः ।
पुंविशेषो भवेदीशो जीववत्सोऽप्यसंगचित्१०५
४००—तथापि पुंविशेषत्वाद्घटतेऽस्य नियंतृता।
अव्यवस्थौ वंधमोक्षावापतेतामिहान्यथा ॥१०६॥
१—भीषाऽस्मादित्येवमादावसंगस्य परात्मनः ।
श्रुतं तद्युक्तमप्यस्य क्लेशकर्माद्यसंगमात् ॥१०७॥

६०
२—जीवानामप्यसंगत्वात्क्लेशादिर्न ह्यथापि च।
विवेकाग्रहतः क्लेशकर्मादि प्रागुदीरितम्॥१०८॥

६२
३—नित्यज्ञानप्रयत्नेच्छागुणानीशस्य मन्वते।
असंगस्य नियंतृत्वमयुक्तमिति तार्किकाः॥१०९

६४
४—पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा।
६६
सत्यकामः सत्यसंकल्प इत्यादिश्रुतिर्जगौ॥११०॥

६८
५—नित्यज्ञानादिमत्वेऽस्य सृष्टिरेव सदा भवेत्।
७०
हिरण्यगर्भ ईशोऽतो लिंगदेहेन संयुतः॥१११॥

७३
६—उद्गीथब्राह्मणे तस्य माहात्म्यमतिविस्तृतम्।
७४
लिंगसत्वेऽपि जीवत्वं नास्य कर्माद्यभावतः॥११२

७६
७—स्थूल देहं विना लिंगदेहो न क्वापि दृश्यते।
वैराजो देह ईशोऽतः सर्वतो मस्तकादिमान्॥११३

७९
८—सहस्रशीर्षेत्येवं च विश्वतश्चक्षुरित्यपि।
श्रुतमित्याहुरनिशं विश्वरूपस्य चिंतकाः॥११४॥

॥ २ ॥ ब्रह्मादिस्थावरपर्यंत ईश्वरे विवादः ॥ ४०९—४१५ ॥

९–सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता ।
ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥ ११५॥

१०–पुत्रार्थं तमुपासीना एवमाहुः प्रजापतिः ।
प्रजा असृजतेत्यादिश्रुतिं चोदाहरंत्यमी ॥११६॥

११–विष्णोर्नाभेः समुद्भूतो वेधाः कमलजस्ततः ।
विष्णुरेवेश इत्याहुर्लोके भागवता जनाः॥११७॥

१२-शिवस्य पादावन्वेष्टुं शाङ्ग्र्यशक्तस्ततः शिवः।
ईशो न विष्णुरित्याहुः शैवा आगममानिनः११८

१३–पुरत्रयं सादयितुं विघ्नेशं सोऽप्यपूजयत् ।
विनायकं प्राहुरीशं गाणपत्यमते रताः ॥११९॥

१४–एवमन्ये स्वस्वपक्षाभिमानेनान्यथाऽन्यथा।
मंत्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥१२०॥

१५–अंतर्यामिणमारभ्य स्थावरांतेशवादिनः ।
संत्यश्वत्थार्कवंशादेः कुलदैवत्वदर्शनात् ॥१२१॥

## ॥ ५ ॥ आत्मतत्त्वविवेचने सर्वमताविरुद्धेश्वरनिर्णयः ॥ ४१६—५०३ ॥

### ॥ १ ॥ ईश्वरत्वस्योपाधिमायावर्णनम् ॥४१६—४४६॥

१६—[३]तत्त्वनिश्चयकामेन न्यायागमविचारिणाम्।
एकैव प्रतिपत्तिः स्यात्[६]साऽप्यत्र स्फुटमुच्यते १२२

१७—मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥१२३॥

१८—[११]इति श्रुत्यनुसारेण न्याय्यो निर्णय ईश्वरे।
[१३]तथासत्यविरोधः स्यात्स्थावरांतेशवादिनाम् १२४

१९—[१६]माया चेयं तमोरूपा तापनीये तदीरणात्।
[३०]अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम्॥१२५

२०—[३३]जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः।
[३५]आवालगोपं स्पष्टत्वादानंत्यं तस्य साऽब्रवीत् १२६

२१-[३६]अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत्।
[३९]यत्र कुंठीभवेद्बुद्धिः स मोह इति लौकिकाः १२७

२२-इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ।
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः२८

२३-नासदासीद्विभातत्वान्नो सदासीच्च बाधनात् ।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः १२९

२४-तुच्छानिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः १३०

२५-अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ ।
प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥१३१॥

२६-अस्वतंत्रा हि माया स्यादप्रतीतेर्विना चितिम् ।
स्वतंत्राऽपि तथैव स्यादसंगस्यान्यथाकृतेः १३२

२७-कूटस्थासंगमात्मानं जगत्त्वेन करोति सा ।
चिदाभासस्वरूपेण जीवेशावपि निर्ममे ॥१३३॥

२८-कूटस्थमनुपद्रुत्य करोति जगदादिकम् ।
दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः॥१३४

२९-द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ।
मायायां दुर्घटत्वं च स्वतः सिद्ध्यति नान्यतः १३५

३०-न वेत्ति लोको यावत्तं साक्षात्तावच्चमत्कृतिम्।
धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति॥१३६॥
३१-प्रसरंति हि चोद्यानि जगद्वस्तुत्ववादिषु।
न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः॥१३७॥
३२चोद्येऽपि यदि चोद्यं स्यात्त्वच्चोद्ये चोद्यते मया।
परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम्॥१३८॥
३३-विस्मयैकशरीराया मायायाश्चोद्यरूपतः।
अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः१३९
३४-मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु।
लोकप्रसिद्धमायाया लक्षणं यत्तदीक्षताम्॥१४०
३५-न निरूपयितुं शक्या विस्पष्टं भासते च या।
सा मायेतींद्रजालादौ लोकाः संप्रतिपेदिरे१४१
३६-स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम्।
मायामयं जगत्तस्मादीक्षस्वापक्षपाततः॥१४२॥
३७-निरूपयितुमारब्धे निखिलैरपि पंडितैः।
अज्ञानं पुरतस्तेषां भाति कक्षासु कासुचित् १४३

३८-देहेंद्रियादयो भावा वीर्येणोत्पादिताः कथम्।
कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम्॥१४४

३९–वीर्यस्यैषः स्वभावश्चेत्कथं तद्विदितं त्वया।
अन्वयव्यतिरेकौ यौ भग्नौ तौ वंध्यवीर्यतः १४५

४०–न जानामि किमप्येतदित्यंते शरणं तव।
अत एव महांतोऽस्य प्रवदंतींद्रजालताम्॥१४६॥

४१–एतस्मात्किमिवेंद्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरम्।
पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं पश्यत्य-
त्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति १४७

४२–देहवद्वटधानादौ सुविचार्य विलोक्यताम्।
क्व धाना कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु१४८

४३–निरुक्तावभिमानं ये दधते तार्किकादयः।
हर्षमिश्रादिभिस्ते तु खंडनादौ सुशिक्षिताः १४९

४४अचिंत्याः खलु ये भावा न तांस्तर्केषु योजयेत्।
अचिंत्यरचनारूपं मनसाऽपि जगत्खलु॥१५०॥

४५—अचिंत्यरचनाशक्तिवीजं मायेति निश्चिनु ।
मायावीजं तदेवैकं सुषुप्तावनुभूयते ॥ १५१ ॥
४६—जाग्रत्स्वप्नजगत्तत्र लीनं बीज इव द्रुमः ।
तस्मादशेषजगतो वासनास्तत्र संस्थिताः॥१५२

॥ २ ॥ ईश्वरस्वरूपम् ॥ ४४७—४५२ ॥

४७—या बुद्धिवासनास्तासु चैतन्यं प्रतिविंबति ।
मेघाकाशवदस्पष्टचिदाभासोऽनुमीयताम्॥१५३
४८—साभासमेव तद्बीजं धीरूपेण प्ररोहति ।
अतो बुद्धौ चिदाभासो विस्पष्टं प्रतिभासते॥१५४
४९मायाभासेन जीवेशौ करोतीति श्रुतौ श्रुतम् ।
मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ॥१५५
५०—मेघवद्वर्तते माया मेघस्थिततुषारवत् ।
धीवासनाश्चिदाभासस्तुषारस्थखवत्स्थितः१५६
५१—मायाधीनश्चिदाभासः श्रुतो मायी महेश्वरः।
अंतर्यामी च सर्वज्ञो जगद्योनिः स एव हि ॥१५७

५२–सौषुप्तमानंदमयं प्रक्रम्यैवं श्रुतिर्जगौ ।
एष सर्वेश्वर इति सोऽयं वेदोक्त ईश्वरः ॥१५८॥

॥ ३ ॥ ईश्वरगुणाः ॥ ४५३—४८१ ॥

५३–सर्वज्ञत्वादिके तस्य नैव विप्रतिपद्यताम् ।
श्रौतार्थस्यावितर्क्यत्वान्मायायांसर्वसंभवात्१५९
५४–अयं यत्सृजते विश्वं तदन्यथयितुं पुमान् ।
न कोऽपि शक्तस्तेनायं सर्वेश्वर इतीरितः॥१६०
५५अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ।
ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥१६१॥
५६–वासनानां परोक्षत्वात्सर्वज्ञत्वं न हीक्ष्यते ।
सर्वबुद्धिषु तद्दृष्ट्वा वासनास्वनुमीयताम् ॥१६२॥
५७–विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ।
अंतस्तिष्ठन्यमयति तेनांतर्यामितां व्रजेत्॥१६३॥
५८–बुद्धौतिष्ठन्नांतरोऽस्याधियानीक्ष्यश्चधीवपुः।
धियमंतर्यमयतीत्येवं वेदेन घोषितम् ॥ १६४ ॥

५९—तंतुः[61] पटे स्थितो यद्वदुपादानतया तथा ।
सर्वोपादानुरूपत्वात्सर्वत्रायमवस्थितः ॥ १६५॥
६०—पटादप्यांतरस्तंतुस्तंतोरप्यंशुरांतरः[63] ।
आंतरत्वस्य विश्रांतिर्यत्रासावनुमीयताम्॥१६६॥
६१—द्वित्र्यांतरत्वकक्षाणां[66] दर्शनेऽप्ययमांतरः ।
न वीक्ष्यते ततो युक्तिश्रुतिभ्यामेव निर्णयः१६७
६२—पटरूपेण[1] संस्थानात्पटस्तंतोर्वपुर्यथा ।
सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा ॥१६८॥
६३—तन्तोः संकोचविस्तारचलनादौ पटो यथा।
अवश्यमेव भवति न स्वातंत्र्यं पटे मनाक् ॥१६९
६४—तथांऽतर्याम्ययं यत्र यया वासनया यथा।
विक्रियते तथाऽवश्यं भवत्येव न संशयः॥१७०
६५—ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया॥१७१॥
६६—सर्वभूतानि विज्ञानमयास्ते हृदये स्थिताः।
तदुपादानभूतेशस्तत्र[3] विक्रियते खलु ॥ १७२ ॥

६७–देहादिपंजरं यंत्रं तदारोहोऽभिमानिता ।
विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ १७३ ॥

६८-विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः । स्वश-
क्त्येशो विक्रियते मायया भ्रामणं हि तत् १७४

६९–अंतर्यमयतीत्युक्त्यायमेवार्थः श्रुतौ श्रुतः। पृ-
थिव्यादिषु सर्वत्र न्यायोऽयं योज्यतां धिया १७५

७०–जानामि धर्मं न च मे प्रवृत्ति-
जानाम्यधर्मं न च मे निवृत्तिः ।
केनापि देवेन हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥ १७६ ॥

७१–नार्थः पुरुषकारेणेत्येवं माशंक्यतां यतः।
ईशः पुरुषकारस्य रूपेणापि विवर्तते ॥ १७७ ॥

७२–ईदृग्बोधेनेश्वरस्य प्रवृत्तिर्मैव वार्यताम् ।
तथापीशस्य बोधेन स्वात्मासंगत्वधीजनिः॥१७८

७३–तावंता मुक्तिरित्याहुः श्रुतयः स्मृतयस्तथा।
श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम् ॥१७९॥

७४आज्ञायांभीतिहेतुत्वं भीषाऽस्मादिति हिश्रुतम्
सर्वेश्वरत्वमेतत्स्यादन्तर्यामित्वतः पृथक् ॥१८०॥
७५–एतस्य वा अक्षरस्य प्रशासन इति श्रुतिः ।
अंतः प्रविष्टः शास्तायं जनानामिति च श्रुतिः१८१
७६–जंगद्योनिर्भवेदेष प्रभवाप्ययकृत्त्वतः ।
आविर्भावतिरोभावावुत्पत्तिप्रलयौ मतौ ॥१८२॥
७७-आविर्भावयति स्वस्मिन्विलीनं सकलं जगत्
प्राणिकर्मवशादेष पटो यद्वत्प्रसारितः ॥ १८३ ॥
७८-पुनस्तिरोभावयति स्वात्मन्येवाखिलं जगत् ।
प्राणिकर्मक्षयवशात्संकोचितपटो यथा ॥ १८४ ॥
७९–रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने ।
तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥१८५॥
८०–आविर्भावतिरोभावशक्तिमत्वेन हेतुना ।
आरंभपरिणामादिचोद्यानां नात्र संभवः ॥१८६
८१–अचेतनानां हेतुः स्याज्जाड्यांशेनेश्वरस्तथा ।
चिदाभासांशतस्त्वेष जीवानां कारणं भवेत्१८७

॥ ४ ॥ प्रसंगाद्ब्रह्मेश्वरयोर्विवेचनम् ॥ ४८२—४९१ ॥

८२-[३०]तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम्।
परः कारणतामेति भावनाज्ञानकर्मभिः ॥१८८॥
८३—[३२]इति वार्तिककारेण जडचेतनहेतुता ।
परमात्मन एवोक्ता नेश्वरस्येति[३४] चेच्छृणु॥१८९॥
८४-[३६]अन्योऽन्याध्यासमत्रापि जीवकूटस्थयोरिव।
ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः॥१९०॥
८५—[३८]सत्यं ज्ञानमनंतं यद्ब्रह्म तस्मात्समुत्थिताः।
खं वाय्वग्निजलोर्व्योषध्यन्नदेहा इति श्रुतिः१९१
८६[४०]आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता।हेतोश्च
सत्यता तस्मादन्योऽन्याध्यास इष्यते ॥१९२॥
८७[४३]अन्योऽन्याध्यासरूपोऽसावन्नलिप्तपटो यथा।
घट्टितेनैकतामेति तद्वद्भ्रांत्यैकतां गतः ॥ १९३ ॥
८८—[४५]मेघाकाशमहाकाशौ विविच्येते न पामरैः।
तद्वद्ब्रह्मेशयोरैक्यं पश्यंत्यापातदर्शिनः ॥ १९४ ॥

८९-उपक्रमादिभिर्लिंगैस्तात्पर्यस्य विचारणात् ।
असंगं ब्रह्म मायावी सृजत्येष महेश्वरः ॥१९५॥
९०-सत्यं ज्ञानमनंतं चेत्युपक्रम्योपसंहृतम् ।
यतो वाचो निवर्तंत इत्यसंगत्वनिर्णयः ॥१९६॥
९१-मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया ।
अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत्॥१९७॥

॥ ५ ॥ ईश्वरतो जगदुत्पत्तिप्रकारः ॥ ४९२—४९९ ॥

९२-आनंदमय ईशोऽयं बहु स्यामित्यवैक्षत ।
हिरण्यगर्भरूपोऽभूत्सुप्तिः स्वप्नो यथा भवेत्१९८
९३-क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ।
द्विविधश्रुतिसद्भावाद्विविधस्वप्नदर्शनात् ॥१९९॥
९४-सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्मकः ।
सर्वाहंमानधारित्वात्क्रियाज्ञानादिशक्तिमान्२००
९५-प्रत्यूषे वा प्रदोषे वा मग्नो मंदे तमस्ययम् ।
लोको भाति यथा तद्वदस्पष्टं जगदीक्ष्यते॥२०१॥

९६-सर्वतो लांच्छितो मष्या यथा स्याद्धट्टितः पटः।
सूक्ष्माकारैस्तथेशस्य वपुः सर्वत्र लांछितम्।२०२
९७-सस्यं वा शाकजातं वा सर्वतोऽङ्कुरितं यथा।
कोमलं तद्वदेवैष पेलवो जगदंकुरः ॥ २०३ ॥
९८-आतपाभातलोको वा पटो वा वर्णपूरितः।
सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट्॥२०४
९९-विश्वरूपाध्याय एष उक्तः सूक्तेऽपि पौरुषे।
धात्रादिस्तंबपर्यंतानेतस्यावयवान्विदुः॥ २०५ ॥

॥ ६ ॥ सर्वरूपेश्वरोपासनफलम् ॥ ५००—५०३ ॥

५००—ईशसूत्रविराड्वेधोविष्णुरुद्रेंद्रवह्नयः।
विघ्नभैरवभैरालमारिकायक्षराक्षसाः ॥ २०६ ॥
१—विप्रक्षत्रियविट्शूद्रा गवाश्वमृगपक्षिणः।
अश्वत्थवटचूताद्या यवव्रीहितृणादयः ॥ २०७॥
२—जलपाषाणमृत्काष्ठवास्याकुद्दालकादयः।
ईश्वराः सर्व एवैते पूजिताः फलदायिनः ॥२०८

३–[३]यथा यथोपासते तं फलमीयुस्तथा तथा ।
फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः ॥२०९॥

## ॥ ६ ॥ अद्वैतब्रह्मज्ञाने विशेषोपयोग्यर्थः

## ॥ ५०४–५५२ ॥

### ॥ १ ॥ जीवेश्वरविवादे बुद्धिप्रवेशनिषेधपूर्विका सविवेचना तदेकता ॥ ५०४—५३५ ॥

४–[४]मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा।
स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा॥२१०

५–[३]अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत् ।
ईशजीवादिरूपेण चेतनाचेतनात्मकम् ॥ २११ ॥

६–[५]आनंदमयविज्ञानमयावीश्वरजीवकौ ।
माययाकल्पितावेतौताभ्यांसर्वंप्रकल्पितम्॥२१२

७–ईक्षणादिप्रवेशांता सृष्टिरीशेन कल्पिता ।
जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः २१३

८–[३]अद्वितीयं ब्रह्मतत्त्वमसंगं तन्न जानते ।
जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः ॥ २१४ ॥

९–ज्ञीला[32] सदा तत्त्वनिष्ठाननुमोदामहे वयम् ।
अनुशोचाम एवान्यान्न भ्रांतैर्विवदामहे ॥ २१५ ॥

१०तृणार्चकादि[34]योगांताईश्वरे भ्रांतिमाश्रिताः। लो-
कायतादिसांख्यांताजीवे विभ्रांतिमाश्रिताः २१६

११ अद्वितीय[36]ब्रह्मतत्त्वं न जानंति यदा तदा। भ्रांता
एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ २१७

१२उत्तमा[33]धमभावश्चेत्तेषां स्यादस्तु तेन किम्। स्व-
प्नस्थराज्यभिक्षाभ्यां न बुद्धः स्पृश्यते खलु॥२१८

१३–तस्मा[34]न्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ।
कार्या किंतु[36] ब्रह्मतत्त्वं विचार्य बुध्यतां च तत्२१९

१४–पूर्वपक्षतया[34] तौ चेत्तत्त्वनिश्चयहेतुताम् ।
प्राप्नुतोऽस्तु निमज्जस्व तयोर्नैतावतावशः ॥२२०

१५–असंग[31]चिद्विभुर्जीवः सांख्योक्तस्तादृगीश्वरः।
योगोक्तस्तत्वमोरर्थौ शुद्धौ ताविति चेच्छृणु[33] २२१

१६–नैं तत्त्वमोरुभावर्थावस्मत्सिद्धांततां गतौ ।
अद्वैतबोधनायैव सा कक्षा काचिदिष्यते २२२

१७–अनादिमायया भ्रांता जीवेशौ सुविलक्षणौ।
मन्यंते तद्व्युदासाय केवलं शोधनं तयोः ॥२२३॥

१८अत एवात्र दृष्टांतो योग्यः प्राक् सम्यगीरितः।
घटाकाशमहाकाशजलाकाशाभ्रखात्मकः ॥२२४

१९–जलाभ्रोपाध्यधीने ते जलाकाशाभ्रखे तयोः।
आधारौ तु घटाकाशमहाकाशौ सुनिर्मलौ॥२२५

२०–एवमानंदविज्ञानमयौ मायाधियोर्वशौ ।
तदधिष्ठानकूटस्थब्रह्मणी तु सुनिर्मले ॥ २२६ ॥

२१–एतत्कक्षोपयोगेन सांख्ययोगौ मतौ यदि ।
देहोऽन्नमयकक्षत्वादात्मत्वेनाभ्युपेयताम्॥२२७॥

२२आत्मभेदो जगत्सत्यमीशोऽन्य इति चेत्रयम्।
त्यज्यते तैस्तदा सांख्ययोगवेदांतसंमतिः ॥२२८

२३–[५९]जीवोऽसंगत्वमात्रेण कृतार्थ इति चेत्तदा ।
स्रक्चंदनादिनित्यत्वमात्रेणापि कृतार्थता ॥२२९॥

२४–[६०]यथा स्रगादिनित्यत्वं दुःसंपाद्यं तथात्मनः ।
असंगत्वं न संभाव्यं जीवतोर्जगदीशयोः ॥२३०॥

२५–[६१]अवश्यं प्रकृतिः संगं पुरेवापादयेत्तथा । नि-
यच्छत्येतमीशोऽपि [६२]कोऽस्य मोक्षस्तथा सति२३१

२६–[६३]अविवेककृतः संगो नियमश्चेति चेत्तदा ।
[६६]बलादापतितो मायावादः सांख्यस्य दुर्मतेः२३२

२७–[६९]वंधमोक्षव्यवस्थार्थमात्मनानात्वमिष्यताम् ।
इति चे[७१]न्न यतो माया व्यवस्थापयितुं क्षमा॥२३३

२८–[७३]दुर्घटं घटयामीति विरुद्धं किन्न पश्यसि ।
[७६]वास्तवौ वंधमोक्षौ तु श्रुतिर्न सहतेतराम् ॥२३४॥

२९ [७७]न निरोधो न चोत्पत्तिर्न वद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥२३५॥

३०मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ।
यथेच्छं पिबतो द्वैतं तत्त्वं त्वद्वैतमेव हि ॥२३६॥
३१—कूटस्थब्रह्मणोर्भेदो नाममात्रादृते न हि।
घटाकाशमहाकाशौ वियुज्येते न हि क्वचित्२३७
३२-यँदद्वैतं श्रुतं सृष्टेः प्राक्तदेवाद्य चोपरि। मुक्ता-
वपि वृथा माया भ्रामयत्यखिलान् जनान् २३८
३३—ये वदंतीत्थमेतेऽपि भ्राम्यंते विद्ययात्र किम्।
नँ यथा पूर्वमेतेषामत्र भ्रांतेरदर्शनात् ॥२३९॥
३४—ऐहिकामुष्मिकः सर्वः संसारो वास्तवस्ततः।
न भाति नास्ति चाद्वैतमित्यज्ञानिविनिश्चयः २४०
३५ज्ञानिनां विपरीतोऽस्मान्निश्चयःसम्यगीक्ष्यते।
स्वस्वनिश्चयतो बद्धो मुक्तोऽहं चेति मन्यते २४१
॥ २ ॥ द्वैताद्वैतवादपूर्वकमद्वैतापरोक्षत्वं द्वैतमिथ्यात्वं च
॥ ५३६—५५२ ॥
३६—नाँद्वैतमपरोक्षं चेन्नँ चिद्रूपेण भासनात्।
अंशेषेण न भातं चेद्द्वैतं किं भासतेऽखिलम् २४२

३७–दिङ्मात्रेण विभानं तु द्वयोरपि समं खलु ।
द्वैतसिद्धिवदद्वैतसिद्धिस्ते तावता न किम् ॥२४३

३८–द्वैतेन हीनमद्वैतं द्वैतज्ञाने कथं त्विदम् ।
चिद्भानं त्वविरोध्यस्य द्वैतस्यातोऽसमे उभे २४४

३९–एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ।
तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ २४५ ॥

४०–अचिंत्यरचनारूपं मायैव सकलं जगत् ।
इति निश्चित्य वस्तुत्वमद्वैते परिशेष्यताम् ॥२४६॥

४१–पुनर्द्वैतस्य वस्तुत्वं भाति चेत्त्वं तथा पुनः ।
परिशीलय को वात्र प्रयासस्तेन ते वद ॥२४७

४२-कियंतं कालमिति चेत्खेदोऽयं द्वैत इष्यताम् ।
अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् २४८

४३-क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत् ।
मच्छब्दवाच्येऽहंकारे दृश्यतां नेति को वदेत् २४९

४४ चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि।
माध्यासं कुरु किंतु त्वं विवेकं कुरु सर्वदा॥२५०

४५-झटित्यध्यास आयाति दृढवासनयेति चेत्।
आवर्तयेद्विवेकं च दृढं वासयितुं सदा ॥२५१॥

४६-विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम्।
अचिंत्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी २५२

४७-चिदप्यचिंत्यरचना यदि तर्ह्यस्तु नो वयम्।
चितिं सुचिंत्यरचनां ब्रूमो नित्यत्वकारणात्२५३

४८-प्रागभावो नानुभूतश्चितेर्नित्या ततश्चितिः।
द्वैतस्य प्रागभावस्तु चैतन्येनानुभूयते ॥ २५४ ॥

४९-प्रागभावयुतं द्वैतं रच्यते हि घटादिवत्।
तथापि रचनाऽचिंत्या मिथ्या तेनेंद्रजालवत् २५५

५० चित्प्रत्यक्षा ततोऽन्यस्य मिथ्यात्वं चानुभूयते।
नाद्वैतमपरोक्षं चेत्येतन्न व्याहतं कथम् ॥ २५६ ॥

५१–इत्थं ज्ञात्वाप्यसंतुष्टाः केचित्कुत इतीर्यताम्।
चार्वाकादेः प्रबुद्धस्याप्यात्मा देहः कुतो वद२५७
५२सम्यग्विचारोनास्त्यस्यधीदोषादितिचेत्तथा।
असंतुष्टास्तु शास्त्रार्थं न त्वैक्षंत विशेषतः ॥२५८॥

## ॥ ७ ॥ तत्त्वज्ञानफलम् ॥५५३–५८४॥

### ॥ १ ॥ तत्त्वज्ञानफलप्रतिपादकश्रुतिव्याख्यानम् ॥ ५५३—५६९ ॥

५३यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः।
इति श्रौतं फलं दृष्टं नेति चेद्दृष्टमेव तत् ॥ २५९ ॥
५४–यदा सर्वे प्रभिद्यंते हृदयग्रन्थयस्त्विति ।
कामाग्रंथिस्वरूपेण व्याख्याता वाक्यशेषतः२६०
५५अहंकारचिदात्मानावेकीकृत्याविवेकतः । इदं
मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः२६१
५६–अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिम् ।
इच्छंस्तु कोटिवस्तूनि न बाधो ग्रंथिभेदतः २६२

५७–[१६]ग्रंथिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः
बुध्वापि पापबाहुल्यादसंतोषो यथा तव॥२६३॥

५८–[२१]अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा।
वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् २६४

५९–[३]ग्रंथिभेदात्पुराप्येवमिति चेत्तन्न विस्मर।
अयमेव ग्रंथिभेदस्तव तेन कृती भवान् ॥२६५॥

६०–नैवं जानंति मूढाश्चेत्सोऽयं ग्रंथिर्न चापरः।
ग्रंथितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥ २६६ ॥

६१–[११]प्रवृत्तौ वा निवृत्तौ वा देहेंद्रियमनोधियाम्।
न किंचिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः २६७

६२[१३]व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा। ना-
हारादावस्तिभेदःसोऽयंन्यायोऽत्रयोज्यताम्२६८

६३-न[१५]द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति।
उदासीनवदासीन इति ग्रंथिभिदोच्यते॥२६९॥

६४-[18]औदासीन्यं विधेयं चेद्[32]वच्छब्दव्यर्थता तदा ।
न[32] शक्ता अस्य देहाद्या इति चेद्रोग एव सः २७०

६५-[30]तत्त्वबोधं क्षयं व्याधिं मन्यंते ये महाधियः ।
तेषां प्रज्ञातिविशदा किं तेषां दुःशकं वद ॥२७१

६६[26]भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा ।
जक्षन्क्रीडन्रतिं विंदन्नित्यश्रौषीर्न किं श्रुतिम् २७२

६७[31]नह्याहारादिसंत्यज्य भरताद्याः स्थिताः क्वचित्
काष्ठपाषाणवत्किन्तु संगभीता उदासते ॥२७३॥

६८-[33]संगी हि बाध्यते लोके निःसंगः सुखमश्नुते ।
तेन संगः परित्याज्यः सर्वदा सुखमिच्छता २७४

६९-[35]अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथान्यथा ।
[37]मूर्खाणां निर्णयस्त्वास्तां[39]मत्सिद्धांत उच्यते २७५

॥ २ ॥ वैराग्यबोधोपरतिवर्णनम् ॥ ५७०—५८४ ॥

७०—[1]वैराग्यबोधोपरमाः सहायास्ते परस्परम् ।
प्रायेण सह वर्तंते वियुज्यंते क्वचित्क्वचित् ॥२७६

७१–हेतुस्वरूपकार्याणि भिन्नान्येषामसंकरः ।
यथावदवगंतव्यः शास्त्रार्थं प्रविविच्यता ॥२७७॥

७२–दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ।
असाधारणहेत्वाद्या वैराग्यस्य त्रयोप्यमी॥२७८

७३–श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ।
पुनर्ग्रंथेरनुदयो बोधस्यैते त्रयो मताः ॥ २७९ ॥

७४–यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ।
स्युर्हेत्वाद्या उपरतेरित्यसंकर ईरितः ॥ २८० ॥

७५-तत्त्वबोधः प्रधानं स्यात्साक्षान्मोक्षप्रदत्वतः ।
बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥२८१॥

७६–त्रयोऽप्यत्यंतपक्वाश्चेन्महतस्तपसः फलम् ।
दुरितेन क्वचित्किंचित्कदाचित्प्रतिबध्यते ॥२८२

७७-वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते । यस्य ।
तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ।२८३ ८

७८–पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा।
मोक्षो विनिश्चितः किंतु दृष्टदुःखं न नश्यति२८४
७९–ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः।
देहात्मवत्परात्मत्वदार्ढ्ये बोधः समाप्यते॥२८५॥
८०–सुप्तिवद्विस्मृतिः सीमा भवेदुपरमस्य हि।
दिशानया विनिश्चेयं तारतम्यमवांतरम्॥२८६॥
८१-आरब्धकर्मनानात्वाद्बुद्धानामन्यथाऽन्यथा।
वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पंडितैः॥२८७॥
८२स्वस्वकर्मानुसारेण वर्ततां ते यथा तथा। अवि-
शिष्टः सर्वबोधः समा मुक्तिरिति स्थितिः॥२८८
८३–जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम्।
मायया तदुपेक्ष्यैव चैतन्ये परिशेष्यताम्॥२८९॥
८४–चित्रदीपमिमं नित्यं येऽनुसंदधते बुधाः।
पश्यंतोऽपि जगच्चित्रं ते मुह्यंति न पूर्ववत्॥२९०

॥ इति श्रीपंचदश्यां चित्रदीपः ॥ ६ ॥

# ॥ अथ तृप्तिदीपः ॥ ७ ॥

॥१॥ "आत्मानं चेद्विजानीयात्" इति श्रुतिगत-"पुरुषोऽहमस्मि" इति पदाभिप्रायः

॥ ५८५—६०२ ॥

॥ १ ॥ ग्रंथारंभः ॥ ५८५—५८६ ॥

८५—आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥१॥

८६—अस्याः श्रुतेरभिप्रायः सम्यगत्र विचार्यते ।
जीवन्मुक्तस्य या तृप्तिः सा तेन विशदायते॥२॥

॥ २ ॥ "पुरुष" इति पदस्यार्थे उपयुक्तसृष्टिकथनपूर्वकः "पुरुष" इति शब्दस्यार्थः ॥ ५८७—५९० ॥

८७—मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ।
कल्पितावेव जीवेशौ ताभ्यां सर्वं प्रकल्पितम्॥३

८८—ईक्षणादिप्रवेशांता सृष्टिरीशेन कल्पिता ।
जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः॥४॥
८९—भ्रमाधिष्ठानभूतात्मा कूटस्थासंगचिद्वपुः।
अन्योऽन्याध्यासतोऽसंगधीस्थजीवोऽत्र पूरुषः५
९०सौधिष्ठानो विमोक्षादौ जीवोऽधिक्रियते न तु।
केवलो निरधिष्ठानविभ्रांतेः क्वाप्यसिद्धितः॥६॥

॥ ३ ॥ "अहमस्मि" इति पदस्यार्थं अहामिति पदस्यार्थविवेचनम् ॥ ५९१–६०२ ॥

९१—अधिष्ठानांशसंयुक्तं भ्रमांशमवलंबते ।
यदा तदाऽहं संसारीत्येवं जीवोऽभिमन्यते॥७॥
९२-भ्रमांशस्य तिरस्कारादधिष्ठानप्रधानता ।
यदा तदा चिदात्माहमसंगोऽस्मीति बुद्ध्यते ॥८
९३—नासंगेऽहंकृतिर्युक्ता कथमस्मीति चेच्छृणु।
एको मुख्यो द्वावमुख्यावित्यर्थस्त्रिविधोऽहमः॥९
९४—अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः।
एकीभूय भवेन्मुख्यस्तत्र मूढैः प्रयुज्यते ॥१०॥

९५–पृथगाभासकूटस्थावमुख्यौ तत्र तत्त्ववित् ।
पर्यायेण प्रयुंक्तेऽहंशब्दं लोके च वैदिके ॥११॥
९६ लौकिकव्यवहारेऽहं गच्छामीत्यादिके बुधः।
विविच्यैव चिदाभासं कूटस्थात्तं विवक्षति ॥१२
९७-असंगोऽहं चिदात्माहमिति शास्त्रीयदृष्टितः ।
अहंशब्दं प्रयुंक्तेऽयं कूटस्थे केवले बुधः ॥ १३ ॥
९८ज्ञानिताऽज्ञानिते त्वात्माभासस्यैव न चात्मनः ।
तथा च कथमाभासः कूटस्थोस्मीति बुद्ध्यतां १४
९९–नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान्।
आभासत्वस्य मिथ्यात्वात्कूटस्थत्वावशेषणात् ।१५
६००-कूटस्थोऽस्मीति बोधोऽपि मिथ्या चेन्नेति को वदेत्।न हि सत्यतयाभीष्टं रज्जुसर्पविसर्पणम् १६
१–तादृशेनापि बोधेन संसारो हि निवर्तते ।
यक्षानुरूपो हि बलिरित्याहुर्लौकिका जनाः॥१७
२–तस्मादाभासपुरुषः सकूटस्थो विविच्य तम्।
कूटस्थोऽस्मीति विज्ञातुमर्हतीत्यभ्यधाच्छ्रुतिः१८

## ॥२॥ उक्तश्रुतिगताः "आत्मानं चेद्विजानीयात्" इत्येभिः पदैः सहायमिति पदस्याभिप्रायः ॥ ६०३–७१९ ॥

॥ १ ॥ अपरोक्षज्ञानस्य तन्नित्यापरोक्षविषयस्य चायमिति पदस्यार्थतः कथनम् ॥ ६०३—६०६ ॥

३–[१]असंदिग्धाविपर्यस्तबोधो देहात्मनीक्ष्यते ।
तद्वदत्रेति निर्णेतुमयमित्यभिधीयते ॥ १९ ॥

४–देहां[२]ऽत्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥२०॥

५–[५३]अयमित्यपरोक्षत्वमुच्यते चेत्त[५६]दुच्यताम् ।
[५४]स्वयंप्रकाशचैतन्यमपरोक्षं सदा यतः ॥ २१ ॥

६–[६१]परोक्षमपरोक्षं च ज्ञानमज्ञानमित्यदः ।
नित्यापरोक्षरूपेऽपि द्वयं स्याद्दशमे यथा ॥२२॥

॥ २ ॥ दार्ष्टांतसहितस्य दशम इति दृष्टांतस्य सप्तावस्थायुक्ततया प्रतिपादनम् ॥ ६०७–६१२ ॥

७–[६४]नवसंख्याहृतज्ञानो दशमो विभ्रमात्तदा । न
वेत्ति दशमोऽस्मीति वीक्ष्यमाणोऽपि तान्नव॥२३

८-[६७]नं भाति नास्ति दशम इति स्वं दशमं तदा ।
मत्वा वक्ति तदज्ञानकृतमावरणं विदुः ॥ २४ ॥

९-[७०]नद्यां ममार दशम इति शोचन्प्ररोदिति ।
अज्ञानकृतविक्षेपं रोदनादिं विदुर्बुधाः ॥ २५ ॥

१०-[७२]न मृतो दशमोऽस्तीति श्रुत्वाऽऽप्तवचनं तदा।
परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत् ॥ २६ ॥

११-[७४]त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः ।
अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥२७॥

१२-[७७]अज्ञानाऽऽवृतिविक्षेपद्विविधज्ञानतृप्तयः ।
शोकापगम इत्येते योजनीयाश्चिदात्मनि ॥२८॥

॥ ३ ॥ चिदाभाससप्तावस्थावर्णनम् ॥ ६१३—६३२ ॥

१३-[७९]संसारासक्तचित्तः संश्चिदाभासः कदाचन।
स्वयंप्रकाशकूटस्थं स्वतत्त्वं नैव वेत्त्ययम् ॥२९ ॥

१४-[८१]न भाति नास्ति कूटस्थ इति वक्ति प्रसंगतः।
कर्ता भोक्ताऽहमस्मीति विक्षेपं प्रतिपद्यते ॥३०॥

१९-अस्ति कूटस्थ इत्यादौ परोक्षं वेत्ति वार्तया।
पश्चात्कूटस्थ एवास्मीत्येवं वेत्ति विचारतः॥३१॥
१६-कर्ता भोक्तेत्येवमादिशोकजातं प्रमुंचति।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तुष्यति ॥३२॥
१७-अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः।
अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरंकुशा ॥ ३३ ॥
१८संप्तावस्था इमाः संति चिदाभासस्य तौस्विमौ
बंधमोक्षौ स्थितौ तत्र तिस्रो बंधकृतः स्मृताः३४
१९-नं जानामीत्युदासीनव्यवहारस्य कारणम्।
विचारप्रागभावेन युक्तमज्ञानमीरितम् ॥ ३५ ॥
२०अमार्गेण विचार्याथ नास्ति नो भाति चेत्यसौ।
विपरीतव्यवहृतिरावृत्तेः कार्यमिष्यते ॥ ३६ ॥
२१-देहद्वयचिदाभासरूपो विक्षेप ईरितः। कर्तृ-
त्वाद्यखिलः शोकः संसाराख्योऽस्य बंधकः॥३७
२२-अज्ञानमावृतिश्चैते विक्षेपात्प्राक् प्रसिद्ध्यतः।
यद्यप्यथाप्यवस्थे ते विक्षेपस्यैव नाऽऽत्मनः ३८

२३–[1]विक्षेपोत्पत्तितः पूर्वमपि विक्षेपसंस्कृतिः ।
अस्त्येव तदवस्थात्वमविरुद्धं ततस्तयोः ॥ ३९ ॥
२४–[11]ब्रह्मण्यारोपितत्वेन ब्रह्मावस्थे इमे इति ।
न शंकनीयं सर्वासां ब्रह्मण्येवाधिरोपणात् ॥४०॥
२५-[13]संसार्यहं विबुद्धोऽहं निःशोकस्तुष्ट इत्यपि ।
जीवगा उत्तरावस्था भांति न ब्रह्मगा यदि ४१
२६–[16]तर्ह्यज्ञोऽहं ब्रह्मसत्वभाने मद्दृष्टितो न हि ।
इति पूर्वे अवस्थे च भासेते जीवगे खलु ॥ ४२ ॥
२७–[19]अज्ञानस्याश्रयो ब्रह्मेत्यधिष्ठानतया जगुः ।
जीवावस्थात्वमज्ञानाभिमानित्वादवादिषम् ॥४३
२८[23]ज्ञानद्वयेन नष्टेऽस्मिन्नज्ञाने तत्कृताऽऽवृतिः ।
न भाति नास्ति चेत्येषा द्विविधापि विनश्यति ४४
२९–[26]परोक्षज्ञानतो नश्येदसत्त्वाऽऽवृत्तिहेतुता ।
अपरोक्षज्ञाननाश्या ह्यभानाऽऽवृत्तिहेतुता ॥४५॥
३०–[29]अभानाऽऽवरणे नष्टे जीवत्वारोपसंक्षयात् ।
कर्तृत्वाद्यखिलः शोकः संसाराख्यो निवर्तते ४६

३१–निर्वृत्ते सर्वसंसारे नित्यमुक्तत्वभासनात् ।
निरंकुशा भवेत्तृप्तिः पुनः शोकासमुद्भवात् ॥४७॥
३२–अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे ।
अवस्थे जीवगे ब्रूत आत्मानं चेदिति श्रुतिः ४८

॥ ४ ॥ आत्मनः परोक्षज्ञानविषयतासंभवः ॥ ६३३—६४१ ॥

३३–अयमित्यपरोक्षत्वमुक्तं तद्द्विविधं भवेत् ।
विषयस्वप्रकाशत्वाद्धियाऽप्येवं तदीक्षणात् ॥४९
३४–परोक्षज्ञानकालेऽपि विषयस्वप्रकाशता ।
समा ब्रह्म स्वप्रकाशमस्तीत्येवं विबोधनात् ॥५०
३५-अहं ब्रह्मेत्यनुल्लिख्य ब्रह्मास्तीत्येवमुल्लिखन्।
परोक्षज्ञानमेतन्न भ्रांतं बाधानिरूपणात् ॥ ५१ ॥
३६ब्रह्म नास्तीति मानं चेत्स्याद्बाध्येत तदा ध्रुवम्
न चैवं प्रबलं मानं पश्यामोऽतो न बाध्यते ५२
३७-व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे स्वर्गधीरपि। भ्रांतिः स्याद्व्यक्त्यनुल्लेखात्सामान्योल्लेखदर्शनात्५३

३८—अपरोक्षत्वयोग्यस्य न परोक्षमतिर्भ्रमः ।
परोक्षमित्यनुल्लेखादर्थात्पारोक्ष्यसंभवात् ॥५४॥
३९—अंशाग्रहीतेर्भ्रांतिश्चेद्घटज्ञानं भ्रमो भवेत् ।
निरंशस्यापि सांशत्वं व्यावर्त्यांशविभेदतः ॥५५
४०—असत्वांशो निवर्तेत परोक्षज्ञानतस्तथा ।
अभानांशनिवृत्तिः स्यादपरोक्षधिया कृता ॥५६॥
४१—दशमोऽस्तीत्यविभ्रांतं परोक्षज्ञानमीक्ष्यते ।
ब्रह्मास्तीत्यपि तद्वत्स्यादज्ञानावरणं समम् ॥५७॥

॥ ५ ॥ केवलवाक्यात्परोक्षज्ञानस्य विचारसहितमहावाक्या-
दपरोक्षज्ञानस्य च प्रतिपादनम् ॥ ६४२—६६६ ॥

४२ आत्मा ब्रह्मेति वाक्यार्थे निःशेषेण विचारिते ।
व्यक्तिरुल्लिख्यते यद्वद्दशमस्त्वमसीत्यतः ॥ ५८ ॥
४३—दशमः क इति प्रश्ने त्वमेवेति निराकृते ।
गणयित्वा स्वेन सह स्वमेव दशमं स्मरेत् ॥ ५९ ॥
४४ दशमोऽस्मीति वाक्योत्था न धीरस्य विहन्यते ।
आदिमध्यावसानेषु न नवत्वस्य संशयः ॥ ६० ॥

४५–सँदेवेत्यादिवाक्येन ब्रह्मसत्त्वं परोक्षतः । गृ-
हीत्वा तत्त्वमस्यादिवाक्याद्व्यक्तिं समुल्लिखेत् ६१
४६–आँदिमध्यावसानेषु स्वस्य ब्रह्मत्वधीरियम्।
नैव व्यभिचरेत्तस्मादापरोक्ष्यं प्रतिष्ठितम् ॥ ६२॥
४७–जँन्मादिकारणत्वाख्यलक्षणेन भृगुः पुरा ।
पारोक्ष्येण गृहीत्वाथ विचाराद्व्यक्तिमैक्षत ।।६३॥
४८-यँद्यपि त्वमसीत्यत्र वाक्यं नोचे भृगोः पिता।
तथाऽप्यन्नं प्राणमिति विचार्यस्थलमुक्तवान्॥६४
४९–अँन्नंप्राणादिकोशेषु सुविचार्य पुनः पुनः।
आनंदव्यक्तिमीक्षित्वा ब्रह्मलक्ष्म्याप्ययूयुजत् ६५
५०–सँत्यं ज्ञानमनंतं चेत्येवं ब्रह्मस्वलक्षणम् ।
उक्त्वा गुहाहितत्वेन कोशेष्वेतत्प्रदर्शितम् ।।६६।।
५१पाँरोक्ष्येण विबुध्येंद्रो य आत्मेत्यादिलक्षणात्।
अपरोक्षीकर्तुमिच्छंश्चतुर्वारं गुरुं ययौ ॥ ६७ ॥
५२-आँत्मा वा इदमित्यादौ परोक्षं ब्रह्म लक्षितम्।
अध्यारोपापवादाभ्यां प्रज्ञानं ब्रह्म दर्शितम्॥६८॥

५३–अवांतरेण वाक्येन परोक्षा ब्रह्मधीर्भवेत् ।
सर्वत्रैव महावाक्यविचारादपरोक्षधीः ॥ ६९ ॥
५४–ब्रह्मापरोक्षसिद्ध्यर्थं महावाक्यमितीरितम् ।
वाक्यवृत्तावतो ब्रह्मापरोक्षे विमतिर्न हि ॥ ७० ॥
५५-आलंबनतया भाति योऽस्मत्प्रत्ययशब्दयोः ।
अंतःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ७१ ॥
५६–मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥७२
५७–प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ।
विरुध्येते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ७३ ॥
५८–तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥७४
५९संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः
अखंडैकरसत्वेन वाक्यार्थो विदुषां मतः ॥७५॥
६०-प्रत्यग्बोधो य आभाति सोऽद्वयानंदलक्षणः ।
अद्वयानंदरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ७६ ॥

६६१-इत्थमन्योऽन्यतादात्म्यप्रतिपत्तिर्यदा भवेत्।
अब्रह्मत्वं त्वमर्थस्य व्यावर्त्येत तदैव हि ॥ ७७ ॥
६६२-तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु।
पूर्णानंदैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ७८ ॥
६६३-एवं सति महावाक्यात्परोक्षज्ञानमीर्यते।
यैस्तेषां शास्त्रसिद्धांतविज्ञानं शोभतेतराम् ॥ ७९
६६४-आस्तांशास्त्रस्यसिद्धांतो युक्त्यावाक्यात्परो-
क्षधीः। स्वर्गादिवाक्यवन्नैवं दशमे व्यभिचारतः ८०
६६५-स्वतोऽपरोक्षजीवस्य ब्रह्मत्वमभिवांछतः।
नश्येत्सिद्धापरोक्षत्वमिति युक्तिर्महत्यहो ॥ ८१ ॥
६६६-वृद्धिमिष्टवतो मूलमपि नष्टमितीदृशम्।
लौकिकं वचनं सार्थं संपन्नं त्वत्प्रसादतः ॥ ८२ ॥

॥ ६ ॥ आपरोक्ष्यसोपाधिकप्रत्यगभिन्नब्रह्मणो वृत्तिव्याप्त्या महावाक्यजन्यापरोक्षज्ञानवर्णनम् ॥ ६६७-६८० ॥

६६७-अंतःकरणसंभिन्नबोधो जीवोऽपरोक्षताम् ॥
अर्हत्युपाधिसद्भावान्न तु ब्रह्मानुपाधितः ॥ ८३ ॥

६८—नैवं ब्रह्मत्वबोधस्य सोपाधिविषयत्वतः ।
यावद्विदेहकैवल्यमुपाधेरनिवारणात् ॥ ८४ ॥

६९-अंतःकरणसाहित्यराहित्याभ्यां विशिष्यते ।
उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा ॥ ८५ ॥

७०यथा विधिरुपाधिः स्यात्प्रतिषेधस्तथा न किम् ।
सुवर्णलोहभेदेन शृंखलात्वं न भिद्यते ॥ ८६ ॥

७१—अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
वेदांतानां प्रवृत्तिः स्याद्द्विधेत्याचार्यभाषितम् ८७

७२—अहमर्थपरित्यागादहं ब्रह्मेति धीः कुतः ।
नैवमंशस्य हि त्यागो भागलक्षणयोदितः ॥ ८८ ॥

७३—अंतःकरणसंत्यागादवशिष्टे चिदात्मनि ।
अहं ब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते ॥ ८९ ॥

७४-स्वप्रकाशोऽपिसाक्ष्येवंधीवृत्त्याव्याप्यतेऽन्य-
वत् । फलव्याप्यत्वमेवास्यशास्त्रकृद्भिर्निवारितम् ९०

७५ बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ ९१

७६–ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते ॥ ९२ ॥
७७–चक्षुर्दीपावपेक्ष्येते घटादिदर्शने यथा ।
न दीपदर्शने किंतु चक्षुरेकमपेक्ष्यते ॥ ९३ ॥
७८स्थितोऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत्पर-
म्।न तु ब्रह्मण्यतिशयं फलं कुर्याद्घटादिवत्॥९४
७९–अप्रमेयमनादिं चेत्यत्र श्रुत्येदमीरितम् ।
मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुता ॥ ९५ ॥
८०-आत्मानं चेद्विजानीयादयमस्मीति वाक्यतः।
ब्रह्मात्मव्यक्तिमुल्लिख्य योबोधःसोऽभिधीयते९६

॥ ७ ॥ बोधदार्ढ्याय श्रवणाद्यभ्यासवर्णनम् ॥ ६८१–७१९ ॥

८१अस्तु बोधोऽपरोक्षोऽत्र महावाक्यात्तथाप्यसौ
न दृढः श्रवणादीनामाचार्यैः पुनरीरणात् ॥९७
८२-अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् ।
समाधिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥९८॥

८३-[१५]वाढं संति ह्यदार्ढ्यस्य हेतवः श्रुत्यनेकता ।
असंभाव्यत्वमर्थस्य विपरीता च भावना ॥९९॥

८४-[१८]शाखाभेदात्कामभेदाच्छ्रुतं कर्मान्यथान्यथा ।
एवमत्रापि माशंकीत्यतः श्रवणमाचरेत् ॥१००॥

८५-[२१]वेदांतानामशेषाणामादिमध्यावसानतः ।
ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत् १०१

८६[२४]समन्वयाध्याय एतत्सूक्तं [२७]धीस्वास्थ्यकारिभिः
तर्कैः संभावनार्थस्य द्वितीयाध्याय ईरिता १०२

८७-[३०]बहुजन्मदृढाभ्यासाद्देहादिष्वात्मधीः क्षणात्
पुनः पुनरुदेत्येवं जगत्सत्यत्वधीरपि ॥ १०३ ॥

८८-वि[३१]परीता भावनेयमैकाग्र्यात्सा निवर्तते ।
तत्त्वोपदेशात्प्रागेव भवत्येतदुपासनात् ॥ १०४॥

८९-[३५]उपास्तयोऽत एवात्र ब्रह्मशास्त्रेऽपि चिंतिताः।
[३७]प्रागनभ्यासिनः पश्चाद्ब्रह्माभ्यासेन तद्भवेत्१०५

९०-[३८]तच्चिंतनं तत्कथनमन्योऽन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥१०६॥

९१-[४३]तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान्[४४]वाचोविग्लापनं हि तत् ७
९२-[४७]अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् १०८
९३-[५]इति श्रुतिस्मृती नित्यमात्मन्येकाग्रतां धियः।
विधत्तो विपरीताया भावनायाः क्षयाय हि १०९
९४-[५३]यद्यथा वर्तते तस्य तत्त्वं हित्वाऽन्यथात्वधीः।
विपरीता भावना स्यात्पि[५६]त्रादावरिधीर्यथा ११०
९५[५८]आत्मा देहादिभिन्नोऽयं मिथ्या चेदं जगत्तयोः
देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥ १११ ॥
९६-[६१]तत्त्वभावनया नश्येत्साऽतो देहातिरिक्तताम्।
आत्मनो भावयेत्तद्वन्मिथ्यात्वं जगतोऽनिशम् ११२
९७[६४]किं मंत्रजपवन्मूर्तिध्यानवद्वाऽऽत्मभेदधीः।
जगन्मिथ्यात्वधीश्चात्र व्यावर्त्या स्यादुतान्यथा ११३
९८-[६७]अन्यथेति विजानीहि [६९]दृष्टार्थत्वेन [७१]भुक्तिवत् ।
[७३]बुभुक्षुर्जपवद्भुंक्ते न कश्चिन्नियतः क्वचित् ॥११४॥

९९-अश्नाति वा न वाश्नाति भुंक्ते वा स्वेच्छयान्यथा।
येन केन प्रकारेण क्षुधामपनिनीषति ॥ ११५ ॥
७००-नियमेन जपं कुर्यादकृतौ प्रत्यवायतः ।
अन्यथाकरणेऽनर्थः स्वरवर्णविपर्ययात् ॥११६॥
१-क्षुधेव दृष्टबाधाकृद्विपरीता च भावना ।
जेया केनाप्युपायेन नास्त्यत्रानुष्ठितेः क्रमः ११७
२-उपायः पूर्वमेवोक्तस्तच्चिंताकथनादिकः ।
एतदेकपरत्वेऽपि निर्बंधो ध्यानवन्न हि ॥ ११८ ॥
३-मूर्तिप्रत्ययसांतत्यमन्यानंतरितं धियः ।
ध्यानं तत्रातिनिर्बंधो मनसश्चंचलात्मनः ॥११९॥
४-चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् १२०
५-अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ।
अपि वन्ह्यशनात्साधो विषमश्चित्तनिग्रहः ॥१२१
६-कथनादौ न निर्बंधः शृंखलाबद्धदेहवत् ।
किंत्वनंतेतिहासाद्यैर्विनोदो नाट्यवद्धियः १२२

७-[१२]चिदेवात्मा जगन्मिथ्येत्यत्र पर्यवसानतः।
निदिध्यासनविक्षेपो नेतिहासादिभिर्भवेत् १२३
८-[१५]कृषिवाणिज्यसेवादौ काव्यतर्कादिकेषु च।
विक्षिप्यते प्रवृत्त्या धीस्तैस्तत्त्वस्मृत्यसंभवात् १२४
९-[१७]अनुसंदधतैवात्र भोजनादौ प्रवर्तितुम्।
शक्यतेऽ[१९]त्यंतविक्षेपाभावा[२१]दाशु पुनः स्मृतेः १२५
१०-तत्त्वविस्मृतिमात्रान्नानर्थः किं[२५]तु विपर्ययात्।
[२८]विपर्येतुं न कालोऽस्ति झटिति स्मरतः क्वचित् १२६
११-[३१]तत्त्वस्मृतेरवसरो नास्त्यनाभ्यासशालिनः।
[३३]प्रत्युताभ्यासघातित्वाद्बलात्तत्त्वमुपेक्ष्यते ॥१२७
१२-तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ।
इति श्रुतं [३५]तथाऽन्यत्र वाचो विग्लापनं त्विति १२८
१३-[३७]आहारादि त्यजन्नैव जीवेच्छास्त्रांतरं त्यजन्।
किं न जीवसि येनैवं करोष्यत्र दुराग्रहम् ॥१२९

१४-जनकादेः कथं राज्यमिति चेद्दृढबोधतः ।
तथा तवापि चेत्तर्कं पठ यद्वा कृषिं कुरु ॥ १३० ॥

१५-मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकांक्षया ।
अक्लिश्यंतः प्रवर्तंते स्वस्वकर्मानुसारतः ॥ १३१ ॥

१६-अतिप्रसंगो मा शंक्यः स्वकर्मवशवर्तिनाम् ।
अस्तु वा कोऽत्र शक्येत कर्म वारयितुं वद १३२

१७-ज्ञानिनोऽज्ञानिनश्चात्र समे प्रारब्धकर्मणी ।
न क्लेशो ज्ञानिनो धैर्यान्मूढः क्लिश्यत्यधैर्यतः १३३

१८-मार्गे गंत्रोर्द्वयोः श्रांतौ समायामप्यदूरताम् ।
जानन्धैर्याद्द्रुतं गच्छेदन्यस्तिष्ठति दीनधीः ॥१३४

१९-साक्षात्कृतात्मधीः सम्यगविपर्ययबाधितः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् १३५

## ॥ ३ ॥ "किमिच्छन्" इति श्रुतिपदस्यार्थत इच्छानिमित्तसंतापाभावः ॥ ७२०—७७५ ॥

### ॥ १ ॥ भोग्येषु दोषदृष्टिपूर्वकं भोगेच्छाभावः ॥ ७२०–७२६ ॥

२०जगन्मिथ्यात्वधी[५८]भावादाक्षिप्तौ काम्यकामुकौ।
[६१]तयोरभावे संतापः शाम्येन्निःस्नेहदीपवत् ॥१३६
२१-[६४]गंधर्वपत्तने किंचिन्नैंद्रजालिकनिर्मिते।
जानन्कामयते किंतु जिहासति हसन्निदम् १३७
२२-[६७]आपातरमणीयेषु भोगेष्वेवं विचारवान्।
नानुरज्यति किंत्वेतान्दोषदृष्ट्या जिहासति १३८
२३-अर्थानामर्जने क्लेशस्तथैव परिपालने।
नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः १३९
२४[७२]मांसपांचालिकायास्तु यंत्रलोलेऽङ्गपंजरे। स्नाय्वस्थिग्रंथिशालिन्याः स्त्रियाः किमिव शोभनम्

२५एवमादिषु शास्त्रेषु दोषा सम्यक् प्रपंचिताः ।
विमृशन्ननिशं तानि कथं दुःखेषु मज्जति ॥ १४१ ॥
२६-क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड्जानन्नामूढस्तज्जिघत्सति ॥ १४२

॥ २ ॥ ज्ञानिनः प्रीतिं विना प्रारब्धभोगः ॥ ७२७-७३४ ॥

२७-प्रारब्धकर्मप्राबल्याद्भोगेष्विच्छा भवेद्यदि ।
क्लिश्यन्नेव तदाप्येष भुंक्ते विष्टिगृहीतवत् ॥ १४३
२८-भुंजानाना अपि बुधाः श्रद्धावंतः कुटुंबिनः ।
नाद्यापि कर्म नश्छिन्नमिति क्लिश्यंति संततम् १४४
२९-नायं क्लेशोऽत्र संसारतापः किंतु विरक्तता ।
भ्रांतिज्ञाननिदानो हि तापः सांसारिकः स्मृतः ॥
३०-विवेकेन परिक्लिश्यन्नल्पभोगेन तृप्यति ।
अन्यथानंतभोगेऽपि नैव तृप्यति कर्हिचित् १४६
३१-न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४७ ॥

३२-[९]परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये।
विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् १४८
३३ [१०]मनसो निगृहीतस्यलीलाभोगोऽल्पकोऽपिय:
तमेवालब्धविस्तारं क्लिष्टत्वाद्बहु मन्यते ॥ १४९॥
३४-[३]बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति।
परैरबद्धो नाक्रांतो न राष्ट्रं बहु मन्यते॥ १५०॥

॥ ३ ॥ त्रिविधप्रारब्धवर्णनम् ॥ ७३५-७४६ ॥

३५-[५]विवेके जाग्रति सति दोषदर्शनलक्षणे।
कथमारब्धकर्मापि भोगेच्छां जनयिष्यति॥ १५१॥
३६-नैष दोषो यतोऽनेकविधं प्रारब्धमीक्ष्यते।
ईच्छानिच्छापरेच्छा च प्रारब्धं त्रिविधं स्मृतम् ५२
३७-[१२]अपथ्यसेविनश्चोरा राजदाररता अपि।
जानंत इव स्वानर्थमिछंत्यारब्धकर्मतः॥ १५३॥
३८-[१५]न चात्रैतद्वारयितुमीश्वरेणापि शक्यते।
[१७]यत ईश्वर एवाह गीतायामर्जुनं प्रति॥ १५४॥

३९-[31]सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति १५५

४०-[32]अवश्यंभाविभावानां प्रतिकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः॥ १५६॥

४१-[34]नं चेश्वरत्वमीशस्य हीयते तावता [35]यतः ।
अवश्यंभावितात्येषामीश्वरेणैव निर्मिता ॥ १५७

४२-[36]प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोः ।
अनिच्छापूर्वकं चास्ति प्रारब्धमिति [37]तच्छृणु १५८

४३-[33]अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः १५९

४४-[36]काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विध्येनमिह वैरिणम् १६०

४५-[39]स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ६१

४६-[40]नानिच्छंतो न चेच्छंतः परदाक्षिण्यसंयुताः ।
सुखदुःखे भजन्त्येतत्परेच्छापूर्वकर्म हि ॥१६२॥

॥ ४ ॥ ज्ञानिनो बाधितेच्छासंभवपूर्वको भोगाद्व्यसनाभावः ॥ ७४७–७५७ ॥

४७-कथं तर्हि किमिच्छन्नित्येवमिच्छा निषिध्यते।
नेच्छानिषेधः किंत्विच्छाबाधो भर्जितबीजवत् १६३
४८-भर्जितानि तु बीजानि संत्यकार्यकराणि च।
विद्वदिच्छा तथेष्टव्याऽसत्त्वबोधान्न कार्यकृत् १६४
४९-दग्धबीजमरोहेऽपि भक्षणायोपयुज्यते।
विद्वदिच्छाप्यल्पभोगं कुर्यान्न व्यसनं बहु ॥१६५
५०-भोगेन चरितार्थत्वात्प्रारब्धं कर्म हीयते।
भोक्तव्यसत्यताभ्रांत्या व्यसनं तत्र जायते १६६
५१-मा विनश्यत्वयं भोगो वर्द्धतामुत्तरोत्तरम्। मा
विघ्नाः प्रतिबध्नंतु धन्योऽस्म्यस्मादिति भ्रमः १६७
५२-यदभावि न तद्भावि भावि चेन्न तदन्यथा।
इति चिंताविषघ्नोऽयं बोधो भ्रमनिवर्तकः १६८
५३-समेऽपि भोगे व्यसनं भ्रांतो गच्छेन्न बुद्धवान्।
अशक्यार्थस्य संकल्पाद्भ्रांतस्य व्यसनं बहु ॥१६९

५४—[७३]मायामयत्वं भोगस्य बुध्वास्थामुपसंहरन् ।
भुंजानोऽपि न संकल्पं कुरुते व्यसनं कुतः १७०

५५—[७६]स्वप्नेंद्रजालसदृशमचिंत्यरचनात्मकम् ।
दृष्टनष्टं जगत्पश्यन्कथं तत्रानुरज्यति ॥ १७१ ॥

५६—[७७]स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन्स्वजागरम् ।
चिंतयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥ १७२ ॥

५७—[७९]चिरं तयोः सर्वसाम्यमनुसंधाय जागरे ।
सत्यत्वबुद्धिं संत्यज्य नानुरज्जति पूर्ववत् १७३

॥ ५ ॥ प्रपंचमिथ्यात्वज्ञानस्य प्रारब्धभोगस्य चाविरोधः ॥ ७५८–७६८ ॥

५८—[८३]इंद्रजालमिदं द्वैतमचिंत्यरचनात्वतः ।
इत्यविस्मरतो हानिः का वा प्रारब्धभोगतः १७४

५९—[८५]निर्बंधस्तत्त्वविद्याया इंद्रजालत्वसंस्मृतौ ।
प्रारब्धस्याग्रहो भोगे जीवस्य सुखदुःखयोः १७५

६०—विद्यारब्धे विरुद्ध्येते न भिन्नविषयत्वतः ।
जानद्भिरप्यैंद्रजालं विनोदो दृश्यते खलु १७६

६१–जगत्सत्यत्वमापाद्य प्रारब्धं भोजयेद्यदि ।
तदा विरोधि विद्याया भोगमात्रान्न सत्यता १७७
६२-अनूनो जायते भोगः कल्पितैः स्वप्नवस्तुभिः ।
जाग्रद्वस्तुभिरप्येवमसत्यैर्भोग इष्यताम् ॥१७८॥
६३–यदि विद्याऽपह्नुवीत जगत्प्रारब्धघातिनी ।
तदा स्यान्न तु मायात्वबोधेन तदपह्नवः ॥१७९॥
६४–अनपह्नुत्य लोकास्तदिंद्रजालमिदं त्विति ।
जानंत्येवानपह्नुत्य भोगं मायात्वधीस्तथा ॥१८०॥
६५-यत्र त्वस्य जगत्स्वात्मा पश्येत्कस्तत्र केन कम् ।
किं जिघ्रेत्किं वदेद्वेति श्रुतौ तु वहु घोषितम् १८१
६६–तेन द्वैतमपह्नुत्य विद्योदेति न चान्यथा ।
तथा च विदुषो भोगः कथं स्यादिति चेच्छृणु ८२
६७-सुषुप्तिविषया मुक्तिविषया वा श्रुतिस्त्विति ।
उक्तं स्वाप्ययसंपत्योरिति सूत्रे ह्यतिस्फुटम् १८३

६८-[१९]अन्यथा याज्ञवल्क्यादेराचार्यत्वं न संभवेत्।
[२१]द्वैतेदृष्टावविद्वत्ता द्वैतादृष्टौ न वाग्वदेत् ॥१८४ ॥

॥ ६ ॥ अपरोक्षविद्यास्वरूपनिर्द्धारः ॥ ७६९—७७५ ॥

६९—[२४]निर्विकल्पसमाधौ तु द्वैतादर्शनहेतुतः ।
सैवापरोक्षविद्येति चेत्[२६]सुषुप्तिस्तथा न किम् १८५
७०-[२८]आत्मतत्त्वं न जानाति सुप्तौ यदि [३१]तदा त्वया ।
आत्मधीरेव विद्येति वाच्यं न द्वैतविस्मृतिः॥१८६
७१—[३३]उभयं मिलितं विद्या यदि [३५]तर्हि घटादयः ।
अर्द्धविद्याभाजिनः स्युः [३७]सकलद्वैतविस्मृतेः १८७
७२—[३९]मशकध्वनिमुख्यानां विक्षेपाणां वहुत्वतः ।
तव विद्या तथा न स्याद्घटादीनां यथा दृढा १८८
७३—[४२]आत्मधीरेव विद्येति यदि [४४]तर्हि सुखी भव ।
[४६]दुष्टचित्तं निरुंध्याच्चे[४८]न्निरुंधि त्वं यथासुखम् ॥१८९
७४—[४९]तदिष्टमे[५१]ष्टव्यमायामयत्वस्य समीक्षणात् ।
[५४]इच्छन्नप्यज्ञवन्नेच्छेत्किमिच्छन्नपि हि श्रुतम् ॥१९०

७५–रागो[५६] लिंगमबोधस्य संतु रागादयो बुधे ।
इति शास्त्रद्वयं सार्थमेवं सत्यविरोधतः ॥ १९१॥

॥ ४ ॥ "कस्य कामाय" इति श्रुत्यंशाभिप्रायत्वेन भोक्तृभावाद्भोगेच्छाजन्यसंतापाभावः॥ ७७६–८०६ ॥

॥ १ ॥ भोक्तृनिषेधपूर्वककूटस्थात्मनोऽसंगता ॥७७६–७८४॥

७६-जगन्[६१]मिथ्यात्ववत्स्वात्मासंगत्वस्य समीक्षणात्
कस्य कामायेति वचो भोक्त्रऽभावविवक्षया १९२

७७–पतिजायादिकं[६२] सर्वं तत्तद्भोगाय नेच्छति ।
किं त्वात्मभोगार्थमिति श्रुतावुद्घोषितं बहु १९३

७८-किं[६५] कूटस्थश्चिदाभासोप्यथो किं वोभयात्मकः
भोक्ता[६८] तत्र न कूटस्थोऽसंगत्वाद्भोक्तृतां व्रजेत् ९४

७९सुख[७०]दुःखाभिमानाख्यो विकारो भोग उच्यते।
कूटस्थश्च विकारी चेत्येतन्न व्याहतं कथम् १९५

८०—विकारिबुद्ध्यधीनत्वादाभासो विकृतावपि।
निरधिष्ठानविभ्रांतिः केवला न हि तिष्ठति १९६

८१—उभयात्मक एवातो लोके भोक्ता निगद्यते।
तादृगात्मानमारभ्य कूटस्थः शेषितः श्रुतौ १९७

८२-आत्मा कतम इत्युक्ते याज्ञवल्क्यो विबोधयन्
विज्ञानमयमारभ्यासंगं तं पर्यशेषयत् ॥ १९८ ॥

८३—कोयमात्मेत्येवमादौ सर्वत्रात्मविचारतः।
उभयात्मकमारभ्य कूटस्थः शेष्यते श्रुतौ ॥१९९॥

८४-कूटस्थसत्यतां स्वस्मिन्नध्यस्यात्माऽविवेकतः
तात्त्विकीं भोक्तृतां मत्वा न कदाचिज्जिहासति २००

॥ २ ॥ भोग्ये प्रेमत्यागेन भोक्तरि प्रेमकर्तव्यता
॥ ७८५–७८८ ॥

८५भोक्ता स्वस्यैव भोगाय पतिजायादिमिच्छति।
एष लौकिकवृत्तांतः श्रुत्या सम्यगनूदितः २०१

८६भोग्यानां भोक्तृशेषत्वान्मा भोग्येष्वनुरज्यताम्
भोक्तर्येव प्रधानेऽतोऽनुरागे तं विधित्सति २०२

८७—याँ प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥ २०३ ॥

२९००
८८—इतिन्यायेन सर्वस्माद्भोग्यजाताद्विरक्तधीः ।
उपसंहृत्य तां प्रीतिं भोक्तर्येव बुभुत्सते ॥ २०४ ॥

॥ ३ ॥ मुमुक्षोरात्मनि सावधानताकर्तव्यतापूर्वकं भोक्तृतत्त्वविवेचनम् ॥ ७८९–७९९ ॥

८९—स्रक्चंदनवधूवस्त्रसुवर्णादिषु पामरः ।
अप्रमत्तो यथा तद्वन्न प्रमाद्यति भोक्तरि ॥२०५॥

९०—काव्यनाटकतर्कादिमभ्यस्यति निरंतरम् ।
विजिगीषुर्यथा तद्वन्मुमुक्षुः स्वं विचारयेत् ॥२०६

९१—जपयागोपासनादि कुरुते श्रद्धया यथा ।
स्वर्गादिवांछया तद्वच्छ्रद्दध्यात्स्वे मुमुक्षया २०७

९२-चित्तैकाग्र्यं यथा योगी महायासेन साधयेत् ।
अणिमादिप्रेप्सयैवं विविच्यात्स्वं मुमुक्षया २०८

९३—कौशलानि विवर्धंते तेषामभ्यासपाटवात् ।
यथा तद्वद्विवेकोऽस्याप्यभ्यासाद्विशदायते २०९

९४–[१६]विविंचता भोक्तृतत्त्वं जाग्रदादिष्वसंगता ।
अन्वयव्यतिरेकाभ्यां साक्षिण्यध्यवसीयते २१०

९५–[११]यत्र यद्दृश्यते द्रष्ट्रा जाग्रत्स्वप्नसुषुप्तिषु ।
तत्रैव तन्नेतरत्रेत्यनुभूतिर्हि संमता ॥ २११ ॥

९६–[२२]स यत्तत्रेक्षते किंचित्तेनानन्वागतो भवेत् ।
दृष्टैव पुण्यं पापं चेत्येवं श्रुतिषु डिंडिमः ॥ २१२

९७–[२५]जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते ॥२१३॥

९८–[२७]एक एवात्मा मंतव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥२१४॥

९९-[२९]त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्योविलक्षणःसाक्षी चिन्मात्रोऽहंसदाशिवः१५

॥ ४ ॥ भोक्तृचिदाभासस्य स्वमिथ्यात्वज्ञानेन भोगेष्वनाग्रहः ॥ ८००–८०६॥

८००–[३२]एवं विवेचिते तत्त्वे विज्ञानमयशब्दितः ।
चिदाभासो विकारी यो भोक्तृत्वं तस्य शिष्यते१६

१–मायिकोऽयं चिदाभासः श्रुतेरनुभवादपि ।
इंद्रजालं जगत्प्रोक्तं तदंतःपात्ययं यतः ॥२१७॥

२-विलयोऽप्यस्य सुप्त्यादौ साक्षिणा ह्यनुभूयते।
एतादृशं स्वस्य भावं विविनक्ति पुनःपुनः २१८

३-विविच्य नाशं निश्चित्य पुनर्भोगं न वाञ्छति।
मुमूर्षुःशायितोभूमौ विवाहंकोऽभिवाञ्छति२१९

४–जिह्रेति व्यवहर्तुं च भोक्ताऽहमिति पूर्ववत्।
छिन्ननास इव ह्रीतः क्लिश्यन्नारब्धमश्नुते॥२२०

५–यदा स्वस्यापि भोक्तृत्वं मंतुं जिह्रेत्ययं तदा।
साक्षिण्यारोपयेदेतदिति कैव कथा वृथा ॥ २२१

६–इत्यभिप्रेत्य भोक्तारमाक्षिपत्यविशंकया ।
कस्य कामायेति ततः शरीरानुज्वरो न हि २२२

## ॥ ५ ॥ ज्ञानिनः शरीरत्रयगतज्वराभावः ॥ ८०७—८३६ ॥

### ॥ १ ॥ शरीरत्रयगतज्वरस्वरूपम् ॥ ८०७—८१२ ॥

७–[८०३]स्थूलं सूक्ष्मं कारणं च शरीरं त्रिविधं स्मृतम् ।
अवश्यं त्रिविधोऽस्त्येव तत्र तत्रोचितो ज्वरः२२३

८–[८०४]वातपित्तश्लेष्मजन्यव्याधयः कोटिशस्तनौ ।
दुर्गंधित्वकुरूपत्वदाहभंगादयस्तथा ॥ २२४ ॥

९–[८०५]कामक्रोधादयः शांतिदांत्याद्या लिंगदेहगाः।
ज्वरद्वयेऽपिबाधंतेप्राप्त्याऽप्राप्त्यानरंक्रमात् २२५

१०–[८०६]स्वं परं च न वेत्त्यात्मा विनष्ट इव कारणे।
आगामिदुःखबीजं चेत्येतदिंद्रेण दर्शितम् २२६

११-[८०७]एते ज्वराः शरीरेषु त्रिषु स्वाभाविका मताः।
[८०८]वियोगे तु ज्वरैस्तानि शरीराण्येव नासते २२७

१२–[८०९]तंतोर्वियुज्येत पटो वालेभ्यः कंबलो यथा।
मृदोघटस्तथादेहोज्वरेभ्योऽपीतिदृश्यताम् २२८

॥ २ ॥ चिदाभासे वास्तवज्वराभावपूर्वकः कूटस्थे ज्वराभावः ॥ ८१३-८१९ ॥

१३–चिदाभासे स्वतः कोऽपि ज्वरो नास्ति यतं-श्रितः। प्रकाशैकस्वभावत्वमेव दृष्टं न चेतरत् २२९
१४चिदाभासेऽप्यसंभाव्याज्वराःसाक्षिणिकाकथा। एवमप्येकतां मेने चिदाभासो ह्यविद्यया २३०
१५-साक्षिसत्यत्वमध्यस्य स्वेनोपेते वपुस्त्रये। तत्सर्वं वास्तवं स्वस्य स्वरूपमिति मन्यते ॥ २३१
१६-एतस्मिन्भ्रांतिकालेऽयं शरीरेषु ज्वरत्स्वथ। स्वयमेव ज्वरामीति मन्यते हि कुटुंबिवत् २३२
१७–पुत्रदारेषु तप्यत्सु तपामीति वृथा यथा। मन्यते पुरुषस्तद्वदाभासोऽप्यभिमन्यते ॥२३३॥
१८-विविच्य भ्रांतिमुझित्वा स्वमप्यगणयन्सदा। चिंतयन्साक्षिणं कस्माच्छरीरमनुसंज्वरेत् २३४
१९–अयथावस्तुसर्पादिज्ञानं हेतुः पलायने। रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति २३५

॥ ३ ॥ साक्ष्यारोपितभोक्तृत्वदोषनिवृत्तये चिदाभासस्य-साक्षितत्परता ॥ ८२०-८२६॥

२०—मिथ्याभियोगदोषस्य प्रायश्चित्तत्वसिद्धये।
क्षमापयन्निवात्मानं साक्षिणं शरणं गतः ॥२३६॥

२१—आवृत्तपापनुत्त्यर्थं स्नानाद्यावर्त्यते यथा।
आवर्तयन्निव ध्यानं सदा साक्षिपरायणः॥२३७॥

२२-उपस्थकुष्ठिनी वेश्या विलासेषु विलज्जते।
जानतोऽग्रे तथाभासः स्वप्रख्यातौ विलज्जते२३८

२३-गृहीतो ब्राह्मणो म्लेच्छैः प्रायश्चित्तं चरन्पुनः।
म्लेच्छैः संकीर्यते नैव तथाभासः शरीरकैः२३९

२४-यौवराज्ये स्थितो राजपुत्रः साम्राज्यवाञ्छया
राजानुकारी भवति तथा साक्ष्यनुकार्ययम् २४०

२५—यो ब्रह्म वेद ब्रह्मैव भवत्येव इति श्रुतिम्।
श्रुत्वा तदेकचित्तः सन्ब्रह्म वेत्ति न चेतरत् २४१

२६—देवत्वकामा ह्यग्न्यादौ प्रविशंति यथा तथा।
साक्षित्वेनावशेषाय स्वविनाशं स वाञ्छति २४२

॥ ४ ॥ ज्ञानिचिदाभासस्य प्रारब्धपर्यंतं व्यवहारसंभव-प्रतिपादनम् ॥ ८२७—८३५ ॥

२७–यावत्स्वदेहदाहं स नरत्वं नैव मुंचति ।
यावदारब्धदेहं स्यान्नाभासत्वविमोचनम्॥२४३॥
२८–रज्जुज्ञानेऽपि कंपादिः शनैरेवोपशाम्यति ।
पुनर्मंदांधकारे सा रज्जुः क्षिप्तोरगी भवेत् २४४
२९एवमारब्धभोगोऽपि शनैः शाम्यति नो हठात्।
भोगकाले कदाचित्तु मर्त्योऽहमिति भासते २४५
३०–नैतावताऽपराधेन तत्त्वज्ञानं विनश्यति ।
जीवन्मुक्तिव्रतं नेदं किंतु वस्तुस्थितिः खलु २४६
३१–दशमोऽपि शिरस्ताडं रुदन्बुध्वा न रोदिति।
शिरोव्रणस्तु मासेन शनैः शाम्यतिनो तदा२४७
३२–दशमामृतिलाभेन जातो हर्षो व्रणव्यथाम्।
तिरोधत्ते मुक्तिलाभस्तथा प्रारब्धदुःखिताम्२४८
३३-व्रताभावाद्यदाध्यासस्तदा भूयो विविच्यता-
म्। रसंसेवी दिने भुंक्ते भूयो भूयो यथा तथा ४९

३४—शमयत्यौषधेनायं दशमः स्वं व्रणं यथा।
भोगेन शमयित्वैतत्प्रारब्धं मुच्यते तथा॥२५०॥

३५किमिच्छन्निति वाक्योक्तः शोकमोक्ष उदीरितः।
आभासस्य ह्यवस्थैषा षष्ठी तृप्तिस्तु सप्तमी २५१

॥ ६ ॥ ज्ञानिचिदाभासस्य सप्तमीनिरंकुशतृप्त्यवस्थावर्णनम् ॥ ८३६—८८२ ॥

॥ १ ॥ प्रतियोगिस्मरणपूर्वकं ज्ञानिनः कृतकृत्यता ॥ ८३६—८५० ॥

३६—सांकुशा विषयैस्तृप्तिरियं तृप्तिर्निरंकुशा।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तृप्यति २५२

३७—ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये।
बहु कृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् २५३

३८—तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम्।
अनुसंदधदेवायमेवं तृप्यति नित्यशः॥२५४॥

३९—दुःखिनोऽज्ञाः संसरंतु कामं पुत्राद्यपेक्षया।
परमानंदपूर्णोऽहं संसरामि किमिच्छया॥२५५॥

४०—अनुतिष्ठंतु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम्२५६

४१-व्याचक्षतां ते शास्त्राणि वेदानध्यापयंतु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः५७

४२-निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च।
द्रष्टारश्चेत्कल्पयंति किं मे स्यादन्यकल्पनात् २५८

४३—गुंजापुंजादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ २५९ ॥

४४शृण्वन्त्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहं।
मन्यंतां संशयापन्ना न मन्येऽहमसंशयः ॥२६०॥

४५विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्ययात्।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥२६१

४६-अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम्।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते २६२

४७-प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥२६३

८८
४८–विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ६४
९०
४९-विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ६५
९२
५०-नित्यानुभवरूपस्य को मे वानुभवः पृथक्।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥२६६॥

॥ २ ॥ कृतकृत्यज्ञान्याचरणनिर्द्धारः ॥ ८५१—८७५ ॥

५१व्यवहारो लौकिको वाशास्त्रीयोवान्यथापिवा।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ २६७ ॥
५२-अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया।
शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ॥२६८
१
५३-देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥२६९
२
५४-विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये॥२७०

५५–एवं च कलहः कुत्र संभवेत्कर्मिणो मम।
विभिन्नविषयत्वेन पूर्वापरसमुद्रवत् ॥ २७१ ॥
५६-वपुर्वाग्धीषु निर्बंधः कर्मिणो न तु साक्षिणि।
ज्ञानिनः साक्ष्यलेपत्वे निर्बंधो नेतरत्र हि ॥२७२
५७-एवं चान्योऽन्यवृत्तांतानभिज्ञौ वधिराविव।
विवदेतां बुद्धिमंतो हसंत्येव विलोक्य तौ २७३
५८यं कर्मी न विजानाति साक्षिणं तस्य तत्त्ववित्।
ब्रह्मत्वं बुद्ध्यतां तत्र कर्मिणः किं विहीयते २७४
५९-देहवाग्बुद्धयस्त्यक्ता ज्ञानिनाऽनृतबुद्धितः।
कर्मी प्रवर्तयत्वाभिर्ज्ञानिनो हीयतेऽत्र किम् २७५
६०-प्रवृत्तिर्नोपयुक्ता चेन्निवृत्तिः क्वोपयुज्यते।
वोधहेतुर्निवृत्तिश्चेद्बुभुत्सायां तथेतरा ॥ २७६ ॥
६१–बुद्धश्चेन्न बुभुत्सेत नोऽप्यसौ बुद्ध्यते पुनः।
अबाधादनुवर्तेत वोधो न त्वन्यसाधनात् ॥२७७
६२-नाविद्या नापि तत्कार्यं बोधं वाधितुमर्हति।
पुरैव तत्त्वबोधेन वाधिते ते उभे यतः ॥२७८॥

६३–बाधितं दृश्यतामक्षैस्तेन बाधो न दृश्यते ।
जीवन्नाखुर्न मार्जारं हंति हन्यात्कथं मृतः २७९
६४–अपि पाशुपतास्त्रेण विद्धश्चेन्न ममार यः ।
निष्फलेषुविनुन्नांगो नंक्ष्यतीत्यत्र का प्रमा २८०
६५-आदावविद्यया चित्रैः स्वकार्यैर्जृंभमाणया ।
युध्वा बोधोऽजयत्सोऽद्य सुदृढो बाध्यतां कथं ८१
६६–तिष्ठंत्वज्ञानतत्कार्यशवा बोधेन मारिताः ।
न भीतिर्बोधसंम्राजः कीर्तिः प्रत्युत तस्य तैः २८२
६७–य एवमतिशूरेण बोधेन न वियुज्यते ।
प्रवृत्त्या वा निवृत्त्या वा देहादिगतयास्य किं ८३
६८-प्रवृत्तावाग्रहो न्याय्यो बोधहीनस्य सर्वथा ।
स्वर्गाय वाऽपवर्गाय यतितव्यं यतो नृभिः २८४
६९–विद्वांश्चेत्तादृशां मध्ये तिष्ठेत्तदनुरोधतः ।
कायेन मनसा वाचा करोत्येवाखिलाः क्रियाः ८५
७०-एषां मध्ये बुभुत्सूनां यदा तिष्ठेत्तदा पुनः ।
बोधायैषां क्रियाः सर्वा दूषयंस्त्यजतु स्वयम् ८६

७१–[६२]अविद्वदनुसारेण वृत्तिर्बुद्धस्य युज्यते ।
[६३]स्तनंधयानुसारेण वर्तते तत्पिता यतः ॥२८७॥

७२-[६४]अधिक्षिप्तस्ताडितो वा वालेन स्वपिता तदा।
न क्लिश्नाति न कुप्येत वालं प्रत्युत लालयेत् ८८

७३-[६५]निंदितः स्तूयमानो वा विद्वानज्ञैर्न निंदति ।
नस्तौतिकिंतुतेषांस्याद्यथावोधस्तथाचरेत् ॥२८९

७४-[६८]येनायं नटनेनात्र बुद्ध्यते कार्यमेव तत् ।
[६९]अज्ञप्रवोधान्नैवान्यत्कार्यमस्त्यत्र तद्विदः ॥२९०॥

७५–[७४]कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरंतरम् ॥२९१

॥ ३ ॥ ज्ञानिनः प्राप्तप्राप्यता ॥ ८७६—८८२ ॥

७६[६१]धन्योऽहं धन्योऽहं नित्यं स्वात्मानमंजसा वेद्मि
धन्योऽहंधन्योऽहंब्रह्मानंदोविभातिमेस्पष्टम्२९२

७७[६३]धन्योऽहं धन्योऽहं दुःखं सांसारिकं नवीक्षेऽद्य
[६६]धन्योऽहंधन्योऽहंस्वस्याज्ञानंपलायितंक्वापि२९३

७८धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित्
धन्योऽहं धन्योहं प्राप्तव्यं सर्वमद्य संपन्नम् २९४

७९–धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके।
धन्योऽहंधन्योहंधन्योधन्यःपुनःपुनर्धन्यः ॥२९५

८०-अहो पुण्यमहो पुण्यं फलितं फलितं दृढम्।
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥२९६॥

८१–अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः।
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥२९७

८२–तृप्तिदीपमिमं नित्यं येऽनुसंदधते बुधाः।
ब्रह्मानंदे निमज्जंतस्ते तृप्यंति निरंतरम् ॥२९८॥

॥ इति श्रीपंचदश्यां तृप्तिदीपः ॥ ७ ॥

# ॥ अथ कूटस्थदीपः ॥ ८ ॥

## ॥१॥ देहाद्बहिरन्तश्च चिदाभासस्य ब्रह्मकूटस्थाभ्यां भेदेन निरूपणम् ॥ ८८३–९२९ ॥

### ॥ १ ॥ त्वंपदलक्ष्यवाच्यकथनपूर्वको देहाद्बहिश्चिदाभासब्रह्मणोर्भेदः ॥ ८८३—८९८ ॥

८३–खादित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत् ।
कूटस्थभासितो देहो धीस्थजीवेन भास्यते ॥१॥

८४–अनेकदर्पणाऽऽदित्यदीप्तीनां बहुसंधिषु ।
इतरा व्यज्यते तासामभावेऽपि प्रकाशते ॥ २ ॥

८५-चिदाभासविशिष्टानां तथाऽनेकधियामसौ ।
संधिं धियामभावं च भासयन्प्रविविच्यताम्॥३॥

८६–घटैकाकारधीस्था चिद्धटमेवावभासयेत् ।
घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥ ४ ॥

८७-[१७]अज्ञातत्वेन ज्ञातोऽयं घटो बुद्ध्युदयात्पुरा।
ब्रह्मणैवोपरिष्टात्तु ज्ञातत्वेनेत्यसौ भिदा ॥ ५ ॥

८८-[२०]चिदाभासांतधीवृत्तिर्ज्ञानं लोहांतकुंतवत्।
जाड्यमज्ञानमेताभ्यां व्याप्तः कुंभो द्विधोच्यते ॥६

८९-[३३]अज्ञातो ब्रह्मणा भास्यो ज्ञातः कुंभस्तथा न किम्। [३६]ज्ञातत्वजननेनैव चिदाभासपरिक्षयः॥७॥

९०-[३]आभासहीनया बुद्ध्या ज्ञातत्वं नैव जन्यते।
तादृग्बुद्धेर्विशेषः को मृदादेः स्याद्विकारिणः॥८॥

९१-[३]ज्ञांत इत्युच्यते कुंभो मृदा लिप्तो न कुत्रचित्।
धीमात्रव्याप्तकुंभस्य ज्ञातत्वं नेष्यते तथा ॥ ९ ॥

९२-[३३]ज्ञांतत्वं नाम कुंभे तच्चिदाभासफलोदयः।
[३६]न फलं ब्रह्मचैतन्यं [३]मानात्प्रागपि सत्वतः ॥१०॥

९३-[४३]परागर्थप्रमेयेषु या फलत्वेन संमता।
संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः॥११॥

९४-[४३]इति वार्तिककारेण चित्सादृश्यं विवक्षितम्।
[४६]ब्रह्मचित्फलयोर्भेदः सहस्र्यां विश्रुतो यतः॥१२

९५-आभास उदितस्तस्माज्ज्ञातत्वं जनयेद्धटे ।
तत्पुनर्ब्रह्मणा भास्यमज्ञातत्ववदेव हि ॥ १३ ॥
९६-धीवृत्त्याभासकुंभानां समूहो भास्यते चिता ।
कुंभमात्रफलत्वात्स एक आभासतः स्फुरेत् ॥१४
९७-चैतन्यं द्विगुणं कुंभे ज्ञातत्वेन स्फुरत्यतः ।
अन्येऽनुव्यवसायाख्यमाहुरेतद्यथोदितम् ॥१५॥
९८-घंटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ।
विज्ञातो घट इत्युक्तिर्ब्रह्मानुग्रहतो भवेत् ॥१६॥

॥ २ ॥ देहस्यांतः कूटस्थचिदाभासयोर्भेदः ॥८९९—९०८॥

९९—आभासब्रह्मणी देहाद्बहिर्यद्वद्विवेचिते ।
तद्वदाभासकूटस्थौ विविच्येतां वपुष्यपि ॥१७॥
९००-अहंवृत्तौ चिदाभासः कामक्रोधादिकेषु च ।
संव्याप्य वर्तते तप्ते लोहे वह्निर्यथा तथा ॥ १८ ॥
१—स्वमात्रं भासयेत्तप्तं लोहं नान्यत्कदाचन ।
एवमाभाससहिता वृत्तयः स्वस्वभासिकाः ॥१९

२-[६७]ऊर्माद्विच्छिद्य विच्छिद्य जायंते वृत्तयोऽखिलाः
सर्वा अपि विलीयंते सुप्तिमूर्छासमाधिषु ॥ २० ॥

३-[६९]संधयोऽखिलवृत्तीनामभावाश्चावभासिताः ।
निर्विकारेण येनासौ कूटस्थ इति चोच्यते॥२१॥

४-घटे द्विगुणचैतन्यं यथा बाह्ये तथांऽऽतरे ।
वृत्तिष्वपि ततस्तत्र वैशद्यं संधितोऽधिकम्॥२२॥

५-ज्ञातताऽज्ञातते नस्तो घटवद्वृत्तिषु क्वचित् ।
स्वस्य स्वेनाग्रहीतत्वात्ताभिश्चाज्ञाननाशनात् २३

६-[८२]द्विगुणीकृतचैतन्ये जन्मनाशानुभूतितः ।
अकूटस्थं तदन्यत्तु कूटस्थमविकारितः ॥ २४ ॥

७-[८४]अंतःकरणतद्वृत्तिसाक्षीत्यादावनेकधा ।
कूटस्थ एव सर्वत्र पूर्वाचार्यैर्विनिश्चितः ॥२५॥

८-आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।
गम्यंते शास्त्रयुक्तिभ्यामित्याभासश्च वर्णितः २६

॥ ३ ॥ चिदाभासनिरूपणम् ॥ ९०९—९२९ ॥

९—बुंद्ध्यवच्छिन्नकूटस्थो लोकांतरगमागमौ ।
कर्तुं शक्तो घटाकाश इवाभासेन किं वद ॥२७॥
१०-शृंण्वसंगः परिच्छेदमात्राज्जीवो भवेन्न हि ।
अन्यथा घटकुड्याद्यैरवच्छिन्नस्य जीवता ॥२८॥
११- नं कुड्यसदृशी बुद्धिः स्वच्छत्वादिति चेत्तंथा।
अस्तु नाम परिच्छेदे किं स्वाच्छ्येन भवेत्तव २९
१२—प्रंस्थेन दारुजन्येन कांसजन्येन वा न हि।
विक्रेतुस्तंडुलादीनां परिमाणं विशिष्यते ॥३०॥
१३—परिमाणाविशेषेऽपि प्रतिविंबो विशिष्यते।
कांस्ये यदि तदा बुद्धावप्याभासो भवेद्बलात् ३१
१४—ईषद्भासनमाभासः प्रतिबिंबस्तथाविधः।
विंबलक्षणहीनः सन्विववद्भासते स हि ॥ ३२॥
१५—ससंगत्वविकाराभ्यां बिंबलक्षणहीनता।
स्फूर्तिरूपत्वमेतस्य बिंबवद्भासनं विदुः ॥ ३३ ॥

१६-न हि धीभावभावित्वादाभासोऽस्ति धियः पृथक्। यथा मृदल्पमेवोक्तं धीरप्येवं स्वदेहतः ३४

१७-देहे मृतेऽपि बुद्धिश्चेच्छास्त्रादस्ति तथा सति। बुद्धेरन्यश्चिदाभासः प्रवेशश्रुतिषु श्रुतः ॥ ३५ ॥

१८-धीयुक्तस्य प्रवेशश्चेन्नैतरेये धियः पृथक्। आत्मा प्रवेशं संकल्प्य प्रविष्ट इति गीयते ॥३६॥

१९-कथं न्विदं साक्षदेहं मदृते स्यादितीरणात्। विदार्य मूर्द्धसीमानं प्रविष्टः संसरत्ययम् ॥३७॥

२०-कथं प्रविष्टोऽसंगश्चेत्सृष्टिर्वाऽस्य कथं वद। मायिकत्वं तयोस्तुल्यं विनाशश्च समस्तयोः॥३८

२१-समुत्थायैष भूतेभ्यस्तान्येवानुविनश्यति। विनष्टमिति मैत्रेय्यै याज्ञवल्क्य उवाच हि॥३९॥

२२-अविनाश्ययमात्मेति कूटस्थः प्रविवेचितः। मात्रासंसर्ग इत्येवमसंगत्वस्य कीर्तनात् भवेत् ५२

२३-जीवापेतं वाव किल शरीरं म्रियते न सः ।
इत्यत्र न विमोक्षोऽर्थः किंतु लोकांतरे गतिः ४१
२४-नाहं ब्रह्मेति बुध्येत स विनाशीति चेन्न तत् ।
सामानाधिकरण्यस्य बाधायामपि संभवात् ॥४२
२५योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव।
ब्रह्मास्मीति धियाऽप्येषा ह्यहं बुद्धिर्निवर्त्यते ४३
२६-नैष्कर्म्यसिद्धावप्येवमाचार्यैः स्पष्टमीरितम् ।
सामानाधिकरण्यस्य बाधार्थत्वमतोऽस्तु तत् ४४
२७-सर्वं ब्रह्मेति जगता सामानाधिकरण्यवत् ।
अहं ब्रह्मेति जीवेन सामानाधिकृतिर्भवेत् ॥४५॥
२८-सामानाधिकरण्यस्य बाधार्थत्वं निराकृतम् ।
यत्नतो विवरणे कूटस्थत्वविवक्षया ॥ ४६ ॥
२९-शोधितस्त्वंपदार्थो यः कूटस्थो ब्रह्मरूपताम्।
स्फूर्तिरूपे विवरणे तथोक्तमितरत्र च ॥ ४७ ॥

## ॥२॥ कूटस्थस्य ब्रह्मणा ऐक्यसंभावनायै तद्विवेचनपूर्वकं जीवादिजगन्मिथ्यात्वम् ॥९३०–९५८॥

### ॥ १ ॥ कूटस्थस्य ब्रह्मणैक्याय बुद्ध्यादितो विवेचनम् ॥ ९३०—९४१ ॥

३०–[६६]देहेंद्रियादियुक्तस्य जीवाभासभ्रमस्य या ।
अधिष्ठानचितिः सैषा कूटस्थाऽत्र विवक्षिता ४८

३१–[६१]जगद्भ्रमस्य सर्वस्य यदधिष्ठानमीरितम् ।
त्रय्यंतेषु तदत्र स्याद्ब्रह्मशब्दविवक्षितम् ॥ ४९ ॥

३२–[७२]एतस्मिन्नेव चैतन्ये जगदारोप्यते यदा ।
तदा तदेकदेशस्य जीवाभासस्य का कथा ॥५०॥

३३–[७५]जगत्तदेकदेशाख्यसमारोप्यस्य भेदतः ।
तत्त्वंपदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितेः ५१

३४[७८]कर्तृत्वादीन्बुद्धिधर्मान्स्फूर्त्याख्यां चात्मरूपतां
दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत् ५२

३५-[८१]बुद्धिः कोऽयमाभासः कोवात्मात्र जगत्कथं
इत्यनिर्णयतोमोहः [८३]सोऽयं संसार इष्यते ॥५३
३६-[८४]बुद्ध्यादीनां स्वरूपं यो विविनक्ति स तत्त्व-
वित् । स एव मुक्त इत्येवं वेदांतेषु विनिश्चयः ५४
३७-[८५]एवं च सति वंधः स्यात्कस्येत्यादिकुतर्कजाः ।
विडंबना दृढं खंड्याः खंडनोक्तिप्रकारतः ॥५५॥
३८-[८६]वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ।
बुभुत्सायांतथाज्ञोऽस्मीत्याभासाज्ञानवस्तुनः ५६
३९-[८७]असत्यालंबनत्वेन सत्यः सर्वजडस्य तु ।
साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥५७॥
४०-[८८]आनंदरूपः सर्वार्थसाधकत्वेन हेतुना ।
सर्वसंबंधवत्त्वेन संपूर्णः शिवसंज्ञितः ॥ ५८ ॥
४१-[८९]इति शैवपुराणेषु कूटस्थः प्रविवेचितः ।
जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ॥५९॥

॥ २ ॥ कूटस्थस्याद्वितीयत्वसंभावनार्थं जीवादि-
जगतो मायिकत्वम् ॥ ९४२—९५८ ॥

४२–मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ।
मायिकावेव जीवेशौ स्वच्छौ तौ काचकुंभवत् ६०

४३–अन्नजन्यं मनो देहात्स्वच्छं यद्वत्तथैव तौ ।
मायिकावपि सर्वस्मादन्यस्मात्स्वच्छतां गतौ ६१

४४-चिद्रूपत्वं च संभाव्यं चित्त्वेनैव प्रकाशनात् ।
सर्वकल्पनशक्ताया मायाया दुष्करं न हि ॥६२॥

४५-अस्मन्निद्रापि जीवेशौ चेतनौ स्वप्नगौ सृजेत् ।
महामाया सृजत्येतावित्याश्चर्यं किमत्र ते ॥६३॥

४६–सर्वज्ञत्वादिकं चेशे कल्पयित्वा प्रदर्शयेत् ।
धर्मिणं कल्पयेद्यास्याः को भारो धर्मकल्पने ६४

४७कूटस्थेऽप्यतिशंकास्यादितिचेन्मातिशंक्यतां ।
कूटस्थमायिकत्वे तु प्रमाणं न हि विद्यते ॥६५॥

४८-वस्तुत्वं घोषयंत्यस्य वेदांताः सकला अपि ।
सपत्नरूपं वस्त्वन्यन्न सहन्तेऽत्र किंचन ॥ ६६ ॥

४९–श्रुत्यर्थं[31] विशदीकुर्मो न तर्काद्वच्मि किंचन।
तेन तार्किकशंकानामत्र कोऽवसरो वद ॥६७॥

५०-तस्मात्कुतर्कं[33] संत्यज्य मुमुक्षुः श्रुतिमाश्रयेत्।
श्रुतौ[35] तु माया जीवेशौ करोतीति प्रदर्शितम् ६८

५१–ईक्षणादिप्रवेशांता[26] सृष्टिरीशकृता भवेत् ।
जाग्रदादिविमोक्षांतः संसारो जीवकर्तृकः॥६९॥

५२–असंग[38] एव कूटस्थः सर्वदा नास्य किंचन ।
भवत्यतिशयस्तेन मनस्येवं विचार्यताम् ॥७०॥

५३-न[31] निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७१ ॥

५४-अवाङ्मनसगम्यं[33] तं श्रुतिर्बोधयितुं सदा ।
जीवमीशं जगद्वापि समाश्रित्य प्रबोधयेत् ॥७२॥

५५-यया[35] यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात्साध्वीत्याचार्यभाषितम्७३

९६–श्रुतितात्पर्यमखिलमबुध्वा भ्राम्यते जडः ।
विवेकी त्वखिलं बुध्वा तिष्ठत्यानंदवारिधौ ॥७४॥

९७–मायामेघो जगन्नीरं वर्षत्वेष यथा तथा ।
चिदाकाशस्यनोहानिर्नवालाभइति स्थितिः ॥७५

९८–इमं कूटस्थदीपं योऽनुसंधत्ते निरंतरम् ।
स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरंतरम् ॥७६॥

॥ इति श्रीपंचदश्यां कूटस्थदीपः ॥ ८ ॥

# ॥ अथ ध्यानदीपः ॥ ९ ॥

## ॥ १ ॥ संवादिभ्रमवद्ब्रह्मतत्त्वोपासनादपि मुक्तिकथनपूर्वकं परोक्षज्ञानाद्ब्रह्मोपासनाप्रकारः ॥९५९–९८७॥

### ॥ १ ॥ संवादिभ्रमवद्ब्रह्मतत्त्वोपासनादपि मुक्तिसंभवः ॥ ९५९—९७१ ॥

४३
९५९-संवादिभ्रमवद्ब्रह्मतत्त्वोपास्त्याऽपि मुच्यते ।
उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥ १ ॥
९६०-मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति २
९६१–दीपोऽपवरकस्यांतर्वर्तते तत्प्रभा बहिः ।
दृश्यते द्वार्यथान्यत्र तद्वद्दृष्टा मणेः प्रभा ॥ ३ ॥
९६२- दूरे प्रभाद्वयं दृष्ट्वा मणिबुद्ध्याभिधावतोः ।
प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि ॥४॥

६३–न[५६] लभ्यते मणिर्दीपप्रभां प्रत्यभिधावता ।
प्रभायां धावतावश्यं लभ्यतैव मणिर्मणेः ॥ ५ ॥
६४–दीपप्रभा[५९]मणिभ्रांतिर्विसंवादिभ्रमः स्मृतः ।
मणिप्रभामणिभ्रांतिः संवादिभ्रम उच्यते ॥६॥
६५–बा[६२]ष्पं धूमतया बुध्वा तत्रांगारानुमानतः ।
वह्निर्यदृच्छया लब्धः स संवादिभ्रमो मतः ॥७॥
६६–गो[६५]दावर्युदकं गंगोदकं मत्वा विशुद्धये ।
संप्रोक्ष्य शुद्धिमाप्नोति स संवादिभ्रमो मतः॥८॥
६७–ज्व[६८]रेणाप्तः सन्निपातं भ्रांत्या नारायणं स्मरन् ।
मृतः स्वर्गमवाप्नोति स संवादिभ्रमो मतः ॥ ९ ॥
६८–प्र[७१]त्यक्षस्यानुमानस्य तथा शास्त्रस्य गोचरे ।
उक्तन्यायेन संवादिभ्रमाः संति हि कोटिशः१०
६९-अ[७३]न्यथा मृत्तिकादारुशिलाः स्युर्देवताः कथं ।
अ[७६]ग्नित्वादिधियोपास्याः कथं वायोषिदादयः ११
७०-अ[७९]यथावस्तुविज्ञानात्फलं लभ्यत ईप्सितम् ।
काकतालीयतः सोऽयं संवादिभ्रम उच्यते॥१२

७१ स्वयं भ्रमोऽपि संवादी यथा सम्यक्फलप्रदः।
ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥ १३ ॥

॥ २ ॥ परोक्षज्ञानाद्ब्रह्मतत्त्वोपासनाप्रकारः ॥ ९७२—९८७ ॥

७२—वेदांतेभ्यो ब्रह्मतत्त्वमखंडैकरसात्मकम् ।
परोक्षमवगम्यैतदहमस्मीत्युपासते ॥ १४ ॥

७३-प्रत्यग्व्यक्तिमनुल्लिख्य शास्त्राद्विष्ण्वादिमूर्तिवत्। अस्ति ब्रह्मेति सामान्यज्ञानमत्र परोक्षधीः १५

७४—चतुर्भुजाद्यवगतावपि मूर्तिमनुल्लिखन्।
अक्षैः परोक्षज्ञान्येव न तदा विष्णुमीक्षते॥१६॥

७५— परोक्षत्वापराधेन भवेन्नातत्त्ववेदनम् ।
प्रमाणेनैव शास्त्रेण सत्यमूर्तेर्विभासनात् ॥१७॥

७६-सच्चिदानंदरूपस्य शास्त्राज्ज्ञानेप्यनुल्लिखन्।
प्रत्यंचं साक्षिणं तत्तु ब्रह्म साक्षान्न वीक्षते॥१८॥

७७—शास्त्रोक्तेनैव मार्गेण सच्चिदानंदनिश्चयात्।
परोक्षमपि तज्ज्ञानं तत्त्वज्ञानं न तु भ्रमः ॥१९॥

७८-ब्रह्म यद्यपि शास्त्रेषु प्रत्यक्त्वेनैव वर्णितम् ।
महावाक्यैस्तथाप्येतद्दुर्बोधमविचारिणः ॥ २० ॥

७९देहाद्यात्मत्वविभ्रांतौ जाग्रत्यां न हठात्पुमान् ।
ब्रह्मात्मत्वेन विज्ञातुं क्षमते मंदधीस्ततः ॥ २१ ॥

८०-ब्रह्ममात्रं सुविज्ञेयं श्रद्धालोः शास्त्रदर्शिनः ।
अपरोक्षद्वैतबुद्धिः परोक्षाद्वैतबुद्ध्यनुत् ॥ २२ ॥

८१-अपरोक्षशिलाबुद्धिर्न परोक्षेशतां नुदेत् ।
प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥२३॥

८२-अश्रद्धालोरविश्वासो नोदाहरणमर्हति ।
श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः ॥ २४ ॥

८३-सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत् ।
विष्णुमूर्त्युपदेशो हि न मीमांसामपेक्षते ॥२५॥

८४-कर्मोपास्ती विचार्येते अनुष्ठेयाविनिर्णयात् ।
बहुशाखाविप्रकीर्णं निर्णेतुं कः प्रभुर्नरः ॥२६॥

८५निर्णीतोऽर्थः कल्पसूत्रैर्ग्रथितस्तावतास्तिकः ।
विचारमंतरेणापि शक्तोऽनुष्ठातुमंजसा ॥ २७ ॥

८६–उपास्तीनामनुष्ठानमार्षग्रंथेषु वर्णितम् ।
विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः ॥२८॥

८७-वेदवाक्यानि निर्णेतुमिच्छन्मीमांसतां जनः ।
आप्तोपदेशमात्रेण ह्यनुष्ठानं हि संभवेत् ॥ २९ ॥

## ॥ २ ॥ विचारादपरोक्षज्ञानोत्पत्तिकथन-पूर्वकं तत्प्रतिबंधकथनम्

## ॥ ९८८–१०११ ॥

### ॥ १ ॥ विचारादपरोक्षज्ञानोत्पत्तिकथनम् ॥ ९८८—९९५ ॥

८८ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम् ।
आप्तोपदेशमात्रेण न संभवति कुत्रचित् ॥ ३० ॥

८९–परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत् ।
अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबंधकः ॥३१॥

९०विचार्याप्यापरोक्षेण ब्रह्मात्मानं न वेत्ति चेत् ।
आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत्॥३२

९१–विचारयन्नामरणं नैवात्मानं लभेत चेत्।
जन्मांतरे लभेतैव प्रतिवंधक्षये सति ॥ ३३ ॥

९२–इहं वाऽमुत्र वा विद्येत्येवं सूत्रकृतोदितम्।
शृण्वंतोऽप्यत्र वहवो यन्न विद्युरिति श्रुतिः॥३४

९३–गर्भे एव शयानः सन्वामदेवोऽवबुद्धवान्।
पूर्वाभ्यस्तविचारेण यद्वदध्ययनादिषु ॥ ३५ ॥

९४–बहुवारमधीतेऽपि यदा नायाति चेत्पुनः।
दिनांतरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान् ॥३६॥

९५–कालेन परिपच्यंते कृषिदर्भादयो यथा।
तद्वदात्मविचारोऽपि शनैः कालेन पच्यते ॥३७॥

॥ २ ॥ अपरोक्षज्ञानोत्पत्तौ त्रिविधप्रतिबंध-
कथनम् ॥ ९९६—१०११ ॥

९६–पुनः पुनर्विचारेपि त्रिविधप्रतिबंधतः।
न वेत्ति तत्त्वमित्येतद्वार्तिके सम्यगीरितम्॥३८॥

९७–कुँतस्तज्ज्ञानमिति चेत्तँद्धि बंधपरिक्षयात् ।
अँसावपि च भूतो वा भावी वा वर्ततेऽथवा ३९
९८–अँधीतवेदवेदार्थोऽप्यत एव न मुच्यते ।
हिरँण्यनिधिदृष्टांतादिदमेव हि दर्शितम् ॥ ४० ॥
९९–अँतीनेनापि महिषीस्नेहेन प्रतिबंधतः ।
भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रगीयते ॥४१
१०००-अँनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान्
ततो यथावद्वेदैष प्रतिबंधस्य संक्षयात् ॥ ४२ ॥
१–प्रँतिबंधो वर्त्तमानो विषयासक्तिलक्षणः ।
प्रज्ञामांद्यं कुतर्कश्च विपर्ययदुराग्रहः ॥ ४३ ॥
२–शँमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ।
नीतेऽस्मिन्प्रतिबंधेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥४४
३–आँगामिप्रतिबंधश्च वामदेवे समीरितः ।
एँकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥४५
४–योगँभ्रष्टस्य गीतायामतीते बहुजन्मनि ।
प्रतिबंधक्षयः प्रोक्तो नँ विचारोऽप्यनर्थकः ॥४६

५–प्राप्य पुण्यकृतॉंल्लोकानात्मतत्त्वविचारतः ।
शुचीनां श्रीमतां गेहे साभिलाषोऽभिजायते ४७

६–अथवा योगिनामेव कुले भवति धीमताम् ।
निस्पृहो ब्रह्मतत्त्वस्य विचारात्तद्धि दुर्लभम् ४८

७–तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयस्तस्मादेतद्धि दुर्लभम् ॥४९॥

८–पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥५०

९-ब्रह्मलोकाभिवांछायां सम्यक् सत्यां निरुध्य तां
विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम् ॥५१

१०–वेदांतविज्ञानसुनिश्चितार्था इति शास्त्रतः ।
ब्रह्मलोके स कल्पांते ब्रह्मणा सह मुच्यते॥५२॥

११-केषांचित्स विचारोऽपि कर्मणा प्रतिबद्ध्यते।
श्रवणायापि बहुभिर्यो न लभ्य इति श्रुतेः ५३

## ॥ ३ ॥ निर्गुणोपासनासंभवप्रकारपूर्वकं बोधोपासनाविलक्षणता॥ १०१२—१०४३॥

### ॥ १ ॥ ज्ञानस्यैव निर्गुणोपासनायाः संभवप्रकारौ ॥ १०१२—१०३१ ॥

१२-अत्यंतबुद्धिमांद्याद्वा सामग्र्या वाऽप्यसंभवात्
यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ५४

१३—निर्गुणब्रह्मतत्त्वस्य न ह्युपास्तेरसंभवः ।
सगुणब्रह्मणीवात्र प्रत्ययावृत्तिसंभवात् ॥ ५५ ॥

१४—अवाङ्मनसगम्यं तन्नोपास्यमिति चेत्तदा ।
अवाङ्मनसगम्यस्य वेदनं न च संभवेत् ॥५६॥

१५—वागाद्यगोचराकारमित्येवं यदि वेत्त्यसौ ।
वागाद्यगोचराकारमित्युपासीत नो कुतः ॥५७॥

१६—सगुणत्वमुपास्यत्वाद्यदि वेद्यत्वतोऽपि तत् ।
वेद्यं चेल्लक्षणावृत्त्या लक्षणं समुपास्यताम् ॥५८॥

१७—ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ।
इति श्रुतेरुपास्यत्वं निषिद्धं ब्रह्मणो यदि ॥५९॥

१८–विदितादन्यदेवेऽति श्रुतेर्वेद्यत्वमस्य न ।
यथाश्रुत्यैव वेद्यं चेत्तथा श्रुत्याप्युपास्यताम् ६०

१९–अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम् ।
वृत्तिव्याप्तिर्वेद्यता चेदुपास्यत्वेऽपि तत्समम् ६१

२०–का ते भक्तिरुपास्तौ चेत्कस्ते द्वेषस्तदीरय ।
मानाभावो नवाच्योऽस्यां बहुश्रुतिषुदर्शनात् ॥ ६२

२१–उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके ।
मांडूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥ ६३ ॥

२२–अनुष्ठानप्रकारोऽस्याः पंचीकरण ईरितः ।
ज्ञानसाधनमेतच्चेन्नेति केनात्र वारितम् ॥ ६४ ॥

२३–नानुतिष्ठति कोऽप्येतदिति चेन्मानुतिष्ठतु ।
पुरुषस्यापराधेन किमुपास्तिः प्रदुष्यति ॥ ६५ ॥

२४–इतोऽप्यतिशयं मत्वा मंत्रान्वश्यादिकारिणः ।
मूढा जपंतु तेभ्योऽतिमूढाः कृषिमुपासताम् ६६

२५–तिष्ठंतु मूढाः प्रकृता निर्गुणोपास्तिरीर्यते ।
विद्यैक्यात्सर्वशाखास्थान् गुणानत्रोपसंहरेत् ६७

२६—आनंदादेर्विधेयस्य गुणसंघस्य संहृतिः ।
आनंदादय इत्यस्मिन्सूत्रे व्यासेन वर्णिता॥६८॥
२७—अस्थूलादेर्निषेध्यस्य गुणसंघस्य संहृतिः ।
तथाव्यासेन सूत्रेऽस्मिन्नुक्ताक्षरधियां त्विति॥६९
२८—निर्गुणब्रह्मतत्त्वस्य विद्यायां गुणसंहृतिः ।
न युज्येतेत्युपालंभो व्यासं प्रत्येव मां न तु॥७०॥
२९—हिरण्यश्मश्रुसूर्यादिमूर्तीनामनुदाहृतेः ।
अविरुद्धं निर्गुणत्वमिति चेत्तुष्यतां त्वया ॥७१॥
३०—गुणानां लक्षकत्वेन न तत्त्वेंऽतः प्रवेशनम् ।
इति चेदस्त्वेवमेव ब्रह्मतत्त्वमुपास्यताम् ॥ ७२ ॥
३१-आनंदादिभिरस्थूलादिभिश्चात्मात्र लक्षितः।
अखंडैकरसः सोऽहमस्मीत्येवमुपासते ॥ ७३ ॥

॥ २ ॥ बोधोपासनाभेदस्य प्रश्नपूर्वककथनम्
॥ १०३२—१०४३ ॥

३२—बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु।
वस्तुतंत्रो भवेद्बोधः कर्तृतंत्रमुपासनम् ॥ ७४ ॥

३३ विचाराज्जायते बोधोऽनिच्छा यं न निवर्तयेत्।
स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम् ७५
३४–तावता कृतकृत्यः सन्नित्यतृप्तिमुपागतः।
जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥ ७६ ॥
३५–आप्तोपदेशं विश्वस्य श्रद्धालुरविचारयन्।
चिंतयेत्प्रत्ययैरन्यैरनंतरितवृत्तिभिः ॥ ७७ ॥
३६–यावच्चिंत्यस्वरूपत्वाभिमानः स्वस्य जायते।
तावद्विचिंत्य पश्चाच्च तथैवामृति धारयेत् ॥ ७८ ॥
३७–ब्रह्मचारी भिक्षमाणो युतः संवर्गविद्यया।
संवर्गरूपतां चित्ते धारयित्वा ह्यभिक्षत ॥ ७९ ॥
३८–पुरुषस्येच्छया कर्तुमकर्तुं कर्तुमन्यथा।
शक्योपास्तिरतो नित्यं कुर्यात्प्रत्ययसंततिम् ८०
३९ वेदाध्यायी ह्यप्रमत्तोऽधीते स्वप्नेऽभिवासितः।
जपिता तु जपत्येव तथा ध्यातापि वासयेत् ८१
४०–विरोधिप्रत्ययं त्यक्त्वा नैरंतर्येण भावयन्।
लभते वासनावेशात्स्वप्नादावपि भावनाम् ॥ ८२

४१भुंजानोऽपि निजारब्धमास्थातिशयतोऽनिशं
ध्यातुं शक्तो न संदेहो विषयव्यसनी यथा ॥८३॥

४२–परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ।
तदेवास्वादयत्यंतः परसंगरसायनम् ॥ ८४ ॥

४३–परसंगं स्वादयंत्या अपि नो गृहकर्म तत् ।
कुंठीभवेदपि त्वेतदापातेनैव वर्तते ॥ ८५ ॥

## ॥ ४ ॥ ज्ञान्युपासकविलक्षणतापूर्वकं ज्ञानस्यान्यसाधनतः श्रेष्ठस्य निर्गुणोपासनस्य फलम्॥१०४४–१११६॥

### ॥ १ ॥ उपासकाज्ज्ञानिनो व्यवहारेण विलक्षणता ॥ १०४४—१०७३ ॥

४४–गृहकृत्यव्यसनिनी यथा सम्यक्करोति तत् ।
परव्यसनिनी तद्वन्न करोत्येव सर्वथा ॥ ८६ ॥

४५-एवं ध्यानैकनिष्ठोऽपि लेशाल्लौकिकमाचरेत् ।
तत्त्ववित्त्वविरोधित्वाल्लौकिकं सम्यगाचरेत् ८७
४६-मायामयः प्रपंचोऽयमात्मा चैतन्यरूपधृक् ।
इति बोधे विरोधः को लौकिकव्यवहारिणः ८८
४७-अपेक्षते व्यवहृतिर्न प्रपंचस्य वस्तुताम् ।
नाप्यात्मजाड्यं किं त्वेषा साधनान्येव कांक्षति ८९
४८-मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान् ।
तत्त्वविन्नोपमृद्नाति व्यवहारोऽस्य नो कुतः ॥९०
४९-उपमृद्नाति चित्तं चेद्ध्यातासौ न तु तत्त्ववित् ।
न बुद्धिमर्दयन्दृष्टो घटतत्त्वस्य वेदिता ॥ ९१ ॥
५०-सकृत्प्रत्ययमात्रेण घटश्चेद्भासते सदा ।
स्वप्रकाशोऽयमात्मा किं घटवच्च न भासते॥९२॥
५१-स्वप्रकाशतया किं ते तद्बुद्धिस्तत्त्ववेदनम् ।
बुद्धिश्च क्षणनाश्येति चोद्यं तुल्यं घटादिषु॥९३॥
५२-घटादौ निश्चिते बुद्धिर्नश्यत्येव यदा घटः ।
इष्टो नेतुं तदा शक्य इति चेत्सममात्मनि ॥९४॥

५३-निश्चित्य सकृदात्मानं यदाऽपेक्षा तदैव तम्।
वक्तुं मंतुं तथा ध्यातुं शक्नोत्येव हि तत्त्ववित् ९५
५४-उपासक इव ध्यायँल्लौकिकं विस्मरेद् यदि।
विस्मरत्येव सा ध्यानाद् विस्मृतिर्न तु वेदनात् ९६
५५-ध्यानं त्वैच्छिकमेकस्य वेदनान्मुक्तिसिद्धितः।
ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिंडिमः॥९७॥
५६-तत्त्वविद्यदि न ध्यायेत्प्रवर्तेत तदा बहिः ।
प्रवर्ततां सुखेनायं को बाधोऽस्य प्रवर्तने ॥९८॥
५७-अतिप्रसंग इति चेत् प्रसंगं तावदीरय ।
प्रसंगो विधिशास्त्रं चेन्न तत्तत्त्वविदं प्रति ॥ ९९ ॥
५८-वर्णाश्रमवयोऽवस्थाभिमानो यस्य विद्यते ।
तस्यैव च निषेधाश्च विधयः सकला अपि १००
५९-वर्णाश्रमादयो देहे मायया परिकल्पिताः।
नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥१०१
६०-समाधिमथ कर्माणि मा करोतु करोतु वा।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥१०२॥

६१ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः १०३
६२ आत्मासंगस्ततोऽन्यत्स्यादिंद्रजालं हि मायिकं।
इत्यचंचलनिर्णीते कुतो मनसि वासना ॥१०४॥
६३- एवं नास्ति प्रसंगोऽपि कुतोऽस्यातिप्रसंजनं।
प्रसंगो यस्य तस्यैव शक्येतातिप्रसंजनम्॥१०५॥
६४-विध्यभावान्न वालस्य दृश्यतेऽतिप्रसंजनम् ।
स्यात्कुतोऽतिप्रसंगोऽस्य विध्यभावे समे सति १०६
६५-न किंचिद्वेत्ति वालश्चेत्सर्वं वेत्त्येव तत्त्ववित् ।
अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः॥१०७
६६—शापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद्यदि ।
तन्न शापादिसामर्थ्यं फलं स्यात्तपसो यतः १०८
६७-व्यासादेरपि सामर्थ्यं दृश्यते तपसो वलात् ।
शापादिकारणादन्यत्तपो ज्ञानस्य कारणम्॥१०९
६८- द्वयं यस्यास्ति तस्यैव सामर्थ्यज्ञानयोर्जनिः ।
एकैकं तु ततः कुर्वन्नेकैकं लभते फलम् ॥ ११०॥

६९–[८३]सामर्थ्यहीनो निंद्यश्चेद्यतिर्विधिविवर्जितः॥
निंद्यते तत्तपोऽप्यन्यैरनिशं भोगलंपटैः॥ १११॥
७०–[८४]भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये।
अहो यतित्वमेतेषां वैराग्यभरमंथरम्॥ ११२॥
७१–[८६]वर्णाश्रमपरान्मूढा निंदंत्वित्युच्यते यदि।
देहात्ममतयो बुद्धं निंदंत्वाश्रममानिनः॥११३॥
७२–[८८]तदित्थं तत्त्वविज्ञाने साधनानुपमर्दनात्।
ज्ञानिनाचरितुं शक्यं सम्यग्राज्यादि लौकिकम्॥
७३-मिथ्यात्वबुद्ध्या तत्रेच्छा नास्ति चेत्तर्हिमास्तु
तत्।ध्यायन्वाथ व्यवहरन्यथारब्धं वसत्वयम्११५

॥ २ ॥ ज्ञानिन उपासकस्य विलक्षणता ॥ १०७४—१०७८ ॥

७४–[९३]उपासकस्तु सततं ध्यायन्नेव वसेद्यतः।
ध्यानेनैव कृतं तस्य ब्रह्मत्वं विष्णुतादिवत् ११६
७५-ध्यानोपादानकं यत्तद्ध्यानाभावे विलीयते।
वास्तवी ब्रह्मता नैव ज्ञानाभावे विलीयते॥११७

७६-ततोऽभिज्ञापकं ज्ञानं न नित्यं जनयत्यदः ।
ज्ञापकाभावमात्रेण न हि सत्यं विलीयते॥११८॥
७७-अस्त्येवोपासकस्यापि वास्तवी ब्रह्मतेति चेत्।
पामराणां तिरश्चां च वास्तवी ब्रह्मता न किम्११९
७८-अज्ञानादपुमर्थत्वमुभयत्रापि तत्समम् ।
उपवासाद्यथा भिक्षा वरं ध्यानं तथान्यतः १२०

॥ ३ ॥ निर्गुणोपासनाश्रेष्ठतापूर्वकं तत्फलकथनम्
॥ १०७९—१११६ ॥

७९—पामराणां व्यवहृतेर्वरं कर्माद्यनुष्ठितिः ।
ततोऽपि सगुणोपास्तिर्निर्गुणोपासना ततः १२१
८०—यावद्विज्ञानसामीप्यं तावच्छ्रैष्ठ्यं विवर्धते ।
ब्रह्मज्ञानायते साक्षान्निर्गुणोपासनं शनैः॥१२२॥
८१—यथा संवादिविभ्रांतिः फलकाले प्रमायते ।
विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः १२३
८२—संवादिभ्रमतः पुंसः प्रवृत्तस्यान्यमानतः ।
प्रमेति चेत्तथोपास्तिर्मांतरे कारणायताम् १२४

८३–मूर्तिध्यानस्य मंत्रादेरपि कारणता यदि ।
अस्तु नाम तथाप्यत्र प्रत्यासत्तिर्विशिष्यते १२५

८४-निर्गुणोपासनं पक्कं समाधिः स्याच्छनैस्ततः।
यः समाधिर्निरोधाख्यः सोनायासेन लभ्यते १२६

८५–निरोधलाभे पुंसोंतरसंगं वस्तु शिष्यते ।
पुनः पुनर्वासितेस्मिन्वाक्याज्जायेत तत्त्वधीः १२७

८६–निर्विकारासंगनित्यस्वप्रकाशैकपूर्णताः ।
बुद्धौ झटिति शास्त्रोक्ता आरोहंत्यविवादतः १२८

८७–योगाभ्यासस्त्वेतदर्थोऽमृतबिंद्वादिषु श्रुतः ।
एवं च दृष्टद्वारापि हेतुत्वादन्यतो वरम् ॥१२९॥

८८– उपेक्ष्य तत्तीर्थयात्राजपादीनेव कुर्वताम् ।
पिंडं समुत्सृज्य करं लेढीति न्याय आपतेत् १३०

८९– उपासकानामप्येवं विचारत्यागतो यदि ।
बाढं तस्माद् विचारस्यासंभवे योग ईरितः १३१

९०–[८७]बहुव्याकुलचित्तानां विचारात्तत्त्वधीर्न हि।
[८८]योगो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति॥१३२॥

९१[८९]अव्याकुलधियां मोहमात्रेणाच्छादितात्मनाम्।
सांख्यनामा विचारः स्यान्मुख्यो [९०]झटिति सिद्धिदः

९२–[९१]यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति १३४

९३–[९२]तत्कारणं सांख्ययोगाभिपन्न इति हि श्रुतिः।
[९३]यस्तु श्रुतेर्विरुद्धः स आभासः सांख्ययोगयोः १३५

९४–[९४]उपासनं नातिपक्वमिह यस्य परत्र सः।
मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते॥१३६

९५–[९५]यं यं वाऽपि स्मरन्भावं त्यजत्यंते कलेवरम्।
तं तमेवैति यच्चित्तस्तेन यातीति शास्त्रतः॥१३७॥

९६–[९६]अंत्यप्रत्ययतो नूनं भावि जन्म [९७]तथा सति।
निर्गुणप्रत्ययोऽपि स्यात्सगुणोपासने यथा १३८

९७–[९८]नित्यनिर्गुणरूपं तन्नाममात्रेण गीयताम्।
[९९]अर्थतो मोक्ष एवैष संवादिभ्रमवन्मतः॥१३९॥

९८-तत्सामर्थ्याज्जायते धीर्मूलाविद्यानिवर्तिका।
अविमुक्तोपासनेन तारकब्रह्मबुद्धिवत् ॥ १४० ॥
९९सोऽकामो निष्काम इति ह्यशरीरो निरिंद्रियः
अभयं हीति मुक्तत्वं तापनीये फलं श्रुतम्॥१४१
११००उपासनस्य सामर्थ्याद्विद्योत्पत्तिर्भवेत्ततः।
नान्यः पंथा इति ह्येतच्छास्त्रं नैव विरुध्यते १४२
१-निष्कामोपासनान्मुक्तिस्तापनीये समीरिता।
ब्रह्मलोकः सकामस्य शैब्यप्रश्ने समीरितः॥१४३
२-य उपास्ते त्रिमात्रेण ब्रह्मलोके स नीयते।
स एतस्माज्जीवघनात्परं पुरुषमीक्षते ॥ १४४ ॥
३-अप्रतीकाधिकरणे तत्क्रतुन्याय ईरितः ।
ब्रह्मलोकफलं तस्मात्सकामस्येति वर्णितम् १४५
४-निर्गुणोपास्तिसामर्थ्यात्तत्र तत्त्वमवेक्षते ।
पुनरावर्तते नायं कल्पांते च विमुच्यते ॥१४६॥
५-प्रणवोपास्तयः प्रायो निर्गुणा एव वेदगाः ।
क्वचित्सगुणताप्युक्ता प्रणवोपासनस्य हि ॥१४७

६—परापरब्रह्मरूप ॐकार उपवर्णितः ।
पिप्पलादेन मुनिना सत्यकामाय पृच्छते॥१४८॥

७—एतदालंबनं ज्ञात्वा यो यदिच्छति तस्य तत् ।
इति प्रोक्तं यमेनापि पृच्छते नचिकेतसे ॥१४९॥

८—इह वा मरणे चास्य ब्रह्मलोकेऽथवा भवेत् ।
ब्रह्मसाक्षात्कृतिः सम्यगुपासीनस्य निर्गुणम् १५०

९—अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरितः ।
विचाराक्षम आत्मानमुपासीतेति संततम्॥१५१

१०—साक्षात्कर्तुमशक्तोऽपि चिंतयेन्मामशंकितः ।
कालेनानुभवारूढो भवेदाफलितो ध्रुवम्॥१५२॥

११-यथागाधनिधेर्लब्धौ नोपायः खननं विना ।
मल्लाभेपि तथा स्वात्मचिंतां मुक्त्वा न चापरः १५३

१२-देहोपलमपाकृत्य बुद्धिकुद्दालकात्पुनः ।
खात्वामनोभुवं भूयोगृह्णीयान्मां निधिंपुमान् १५४

१३-अनुभूतेरभावेऽपि ब्रह्मास्मीत्येव चिंत्यताम् ।
अप्यसत्प्राप्यते ध्यानान्नित्याप्तं ब्रह्मकिंपुनः १५५

१४-अनात्मबुद्धिशैथिल्यं फलं ध्यानाद्दिने दिने।
पश्यन्नपि न चेद्ध्यायेत्कोऽपरोऽस्मात्पशुर्वद १५६
१५-देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम्।
पश्यन्मर्त्योऽमृतो भूत्वा ह्यत्र ब्रह्म समश्नुते १५७
१६-ध्यानदीपमिमं सम्यक् परामृशति यो नरः।
मुक्तसंशय एवायं ध्यायति ब्रह्म संततम्॥१५८

॥ इति श्रीपंचदश्यां ध्यानदीपः ॥ ९ ॥

# ॥ अथ नाटकदीपः ॥ १० ॥

## ॥ १ ॥ अध्यारोपापवादपूर्वकं बंधनिवृत्त्युपायविचारस्य विषयेण सह कथनम् ॥ १११७–११३१ ॥

### ॥ १ ॥ अध्यारोपससाधनापवादौ ॥ १११७—११२१ ॥

१७–परमात्माद्वयानंदपूर्णः पूर्वं स्वमायया।
स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ॥ १ ॥
१८-विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवताऽभवत्।
मर्त्याद्यधमदेहेषु स्थितो भजति देवताम् ॥ २ ॥
१९–अनेकजन्मभजनात्स्वविचारं चिकीर्षति।
विचारेण विनष्टायां मायायां शिष्यते स्वयम् ३
२०–अद्वयानंदरूपस्य सद्वयत्वं च दुःखिता।
बंधः प्रोक्तः स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥४॥

२१–अविचारकृतो बंधो विचारेण निवर्तते ।
तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ५ ॥

॥ २ ॥ उक्तविचारस्य विषयस्वरूपम् ॥ ११२२—११२६ ॥

२२-अहमित्यभिमंता यः कर्तासौ तस्य साधनम् ।
मनस्तस्य क्रिये अंतर्बहिर्वृत्ती क्रमोत्थिते ॥ ६ ॥

२३-अंतर्मुखाहमित्येषा वृत्तिः कर्तारमुल्लिखेत् ।
वहिर्मुखेदमित्येषा वाह्यं वस्त्विदमुल्लिखेत् ॥ ७ ॥

२४–इदमो ये विशेषाः स्युर्गंधरूपरसादयः ।
असांकर्येण तान्विद्याद्घ्राणादींद्रियपंचकम् ॥ ८ ॥

२५–कर्तारं च क्रियां तद्वद् व्यावृत्तविषयानपि ।
स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ॥ ९

२६-ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहं ।
इति भासयते सर्वं नृत्यशालास्थदीपवत् ॥ १० ॥

॥ ३ ॥ उक्तदृष्टांतवर्णनेन परमात्मनो निर्विकारतया सर्वप्रकाशकता ॥११२७—११३१॥

२७-नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीं ।
दीपयेदविशेषेण तदभावेऽपि दीप्यते ॥ ११ ॥

२८-अहंकारं धियं साक्षी विषयानपि भासयेत्।
अहंकाराद्यभावेऽपि स्वयं भात्येव पूर्ववत्॥१२॥

२९-निरंतरं भासमाने कूटस्थे ज्ञप्तिरूपतः।
तद्भासा भासमानेयं बुद्धिर्नृत्यत्यनेकधा ॥१३॥

३०-अहंकारः प्रभुः सभ्या विषया नर्तकी मतिः।
तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासकः १४

३१-स्वस्थानसंस्थितो दीपः सर्वतो भासयेद्यथा।
स्थिरस्थायी तथा साक्षी बहिरंतः प्रकाशयेत् १५

॥ २ ॥ परमात्मनो यथार्थस्वरूपस्य वि-
शेषेण निर्द्धारः ॥ ११३२—११४२ ॥

॥ १ ॥ साक्षिणि बुद्धिचंचलतारोपः ॥ ११३२—११३५ ॥

३२-बहिरंतर्विभागोऽयं देहापेक्षो न साक्षिणि।
विषया बाह्यदेशस्था देहस्यांतरहंकृतिः ॥ १६ ॥

३३-अंतस्था धीः सहैवाक्षैर्बहिर्याति पुनः पुनः।
भास्यबुद्धिस्थचांचल्यं साक्षिण्यारोप्यते वृथा १७

३४—गृहांतरगतः स्वल्पो गवाक्षादातपोऽचलः ।
तत्र हस्ते नर्त्यमाने नृत्यतीवातपो यथा ॥१८॥
३५—निजस्थानस्थितः साक्षी बहिरंतर्गमागमौ ।
अकुर्वन्बुद्धिचांचल्यात्करोतीव तथा तथा ॥ १९

॥ २ ॥ साक्षिणो देशकालादिरहितनिजस्वरूपकथन-
पूर्वकस्तदनुभवोपायः ॥११३६—११४२॥

३६- न बाह्यो नांतरः साक्षी बुद्धेर्देशौ हि तावुभौ ।
बुद्ध्याद्यशेषसंशांतौ यत्र भात्यस्ति तत्र सः २०
३७देशः कोऽपि न भासेत यदि तर्ह्यस्वदेशभाक्।
सर्वदेशप्रकॢप्त्यैव सर्वगत्वं न तु स्वतः ॥ २१ ॥
३८— अंतर्बहिर्वा सर्वं वा यं देशं परिकल्पयेत्।
बुद्धिस्तद्देशगः साक्षी तथा वस्तुषु योजयेत् २२
३९-यंद्यद्रूपादि कल्प्येत बुद्ध्या तत्तत्प्रकाशयन्।
तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः २३
४०—कथं तादृङ्मया ग्राह्य इति चेन्मैव गृह्यताम्।
सर्वग्रहोपसंशांतौ स्वयमेवावशिष्यते ॥ २४ ॥

४१–न तत्र मानापेक्षाऽस्ति स्वप्रकाशस्वरूपतः ।
तादृग्व्युत्पत्त्यपेक्षा चेच्छ्रुतिं पठ गुरोर्मुखात् ॥२५

४२–यदि सर्वगृहत्यागोऽशक्यस्तर्हि धियं व्रज ।
शरणं तदधीनोऽन्तर्बहिरेषोऽनुभूयताम् ॥ २६ ॥

॥ इति श्रीपंचदश्यां नाटकदीपः ॥ १० ॥

# ॥ अथ ब्रह्मानंदगतयोगानंदः ॥ ११ ॥

## ॥ १ ॥ श्रुत्या ब्रह्मज्ञानस्यानर्थनिवृत्त्यानंदप्राप्तिकारणताकथनपूर्वकं ब्रह्मण आनंदताद्वितीयतास्वप्रकाशकतासिद्धिः

॥ ११४३—११७४ ॥

### ॥ १ ॥ अनेकश्रुतिभिर्ब्रह्मज्ञानस्यानर्थनिवृत्तिपरमानंदप्राप्तिहेतुताकथनम् ॥ ११४३—११५२ ॥

४३—ब्रह्मानंदं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः ।
ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ १ ॥

४४—ब्रह्मवित्परमाप्नोति शोकं तरति चात्मवित्।
रसो ब्रह्म रसं लब्ध्वानंदी भवति नान्यथा ॥ २ ॥

४५ प्रतिष्ठां विंदते स्वस्मिन्यदा स्यादथ सोऽभयः
कुरुतेऽस्मिन्नंतरं चेदथ तस्य भयं भवेत् ॥ ३ ॥

४६—[६७]वायुः सूर्यो वह्निरिंद्रो मृत्युर्जन्मांतरेऽतरम् ।
कृत्वा धर्मं विजानंतोऽप्यस्माद्भीत्या चरंति हि ४

४७—[६८]आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ।
[६९]एतमेव तपेन्नैषा चिंता कर्माग्निसंभृता ॥ ५ ॥

४८—[७०]एवं विद्वान्कर्मणी द्वे हित्वात्मानं स्मरेत्सदा ।
कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥ ६ ॥

४९—[७१]भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ।
क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ७ ॥

५०—[८२]तमेव विद्वानत्येति मृत्युं पंथा न चेतरः ।
[८]ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक्॥८

५१—[८८]देवं मत्वा हर्षशोकौ जहात्यत्रैव धैर्यवान् ।
[९१]नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ॥ ९ ॥

५२-[९]इत्यादिश्रुतयो बह्वयः पुराणैः स्मृतिभिः सह ।
[९]ब्रह्मज्ञानेऽनर्थहानिमानंदं चाप्यघोषयन् ॥१०॥

॥ २ ॥ श्रुत्या ब्रह्मण आनंदरूपताकथनपूर्वकं ब्रह्मणोऽद्वितीयस्वप्रकाशतासिद्धिः ॥ ११५३—११७४ ॥

९३-आनंदस्त्रिविधो ब्रह्मानंदो विद्यासुखं तथा ।
विषयानंद इत्यादौ ब्रह्मानंदो विविच्यते ॥११॥
९४-भृगुः पुत्रः पितुः श्रुत्वा वरुणाद्ब्रह्मलक्षणम् ।
अन्नप्राणमनोबुद्धीस्त्यक्त्वानंदं विजज्ञिवान्॥१२
९५-आनंदादेव भूतानि जायंते तेन जीवनम् ।
तेषां लयश्च तत्रातो ब्रह्मानंदो न संशयः ॥ १३ ॥
९६-भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् ।
ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥ १४ ॥
९७-विज्ञानमय उत्पन्नो ज्ञाता ज्ञानं मनोमयः ।
ज्ञेयाः शब्दादयो नैतत्त्रयमुत्पत्तितः पुरा ॥ १५ ॥
९८-त्रयाभावे तु निर्द्वैतः पूर्ण एवानुभूयते ।
समाधिसुप्तिमूर्च्छासु पूर्णः सृष्टेः पुरा तथा ॥१६॥
९९-यो भूमा स सुखं नाल्पे सुखं त्रेधा विभेदिनि।
सनत्कुमारः प्राहैवं नारदायातिशोकिने ॥ १७ ॥

६०³⁶सपुराणान्पंच वेदाञ्छास्त्राणि विविधानि च।
ज्ञात्वाऽप्यनात्मवित्त्वेन नारदोऽतिशुशोच ह१८
[37]
६१–वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता।
पश्चात्त्वभ्यासविस्मारभंगगर्वैश्च शोकिता ॥१९॥
६२-[40]सोहं विद्वन्प्रशोचामि शोकपारं नयात्र माम्।
इत्युक्तः सुखमेवास्य पारमित्यभ्यधादृषिः॥२०॥
६३–[42]सुखं वैषयिकं शोकसहस्रेणावृतत्वतः।
दुःखमेवेति मत्वाह नाल्पेऽस्ति सुखमित्यसौ॥२१
६४–[45]ननु द्वैते सुखं माभूदद्वैतेऽप्यस्ति नो सुखम्।
[46]अस्ति चेदुपलभ्येत [47]तथा च त्रिपुटी भवेत् ॥२२॥
६५–[52]मास्त्वद्वैते सुखं [55]किंतु सुखमद्वैतमेव हि।
किं [56]मानमिति चेन्नास्ति मानाकांक्षा स्वयंप्रभे २३
६६–[59]स्वप्रभत्वे भवद्वाक्यं मानं [63]यस्माद्भवानिदम्।
अद्वैतमभ्युपेत्यास्मिन्सुखं नास्तीति भाषते॥२४॥
६७–[65]नाभ्युपैम्यहमद्वैतं त्वद्वचोऽनूद्य दूषणम्।
वच्मीति चे[66]त्तदा ब्रूहि किमासीद्द्वैततः पुरः॥२५॥

६८–किमद्वैतमुत द्वैतमन्यो वा कोटिरंतिमः ।
अप्रसिद्धो न द्वितीयोऽनुत्पत्तेः शिष्यतेऽग्रिमः२६

६९–अद्वैतसिद्धिर्युक्त्यैव नानुभूत्येति चेद्वद ।
निर्दृष्टांता सदृष्टांता वा कोट्यंतरमत्र नो ॥ २७ ॥

७०–नानुभूतिर्न दृष्टांत इति युक्तिस्तु शोभते ।
सदृष्टांतत्वपक्षे तु दृष्टांतं वद मे मतम् ॥ २८ ॥

७१–अद्वैतः प्रलयो द्वैतानुपलंभेन सुप्तिवत् ।
इति चेत्सुप्तिरद्वैते तत्र दृष्टांतमीरय ॥ २९ ॥

७२–दृष्टांतः परसुप्तिश्चेदहो ते कौशलं महत् ।
यः स्वसुप्तिं न वेत्त्यस्य परसुप्तौ तु का कथा ॥३०॥

७३–निश्चेष्टत्वात्परः सुप्तो यथाऽहमिति चेत्तदा ।
उदाहर्तुः सुषुप्तेस्ते स्वप्रभत्वं बलाद्भवेत् ॥ ३१ ॥

७४-नेंद्रियाणि न दृष्टांतस्तथाऽप्यंगीकरोषि ताम् ।
इदमेव स्वप्रभत्वं यद्भानं साधनैर्विना ॥ ३२ ॥

## ॥ २ ॥ आनंदस्वरूपसहितं तद्विवेचनम्

## ॥ ११७५—१२३० ॥

### ॥ १ ॥ सुषुप्तौ ब्रह्मानंदसिद्धिः ॥ ११७५—१२१८ ॥

७५—आस्तामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ।
शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ३३
७६ अंधः संनप्यनंधः स्याद्विद्धोऽविद्धोऽथरोग्यपि
अरोगीति श्रुतिः प्राह तच्च सर्वे जना विदुः॥३४॥
७७—न दुःखाभावमात्रेण सुखं लोष्टशिलादिषु ।
द्वयाभावस्य दृष्टत्वादिति चेद्विषमं वचः ॥ ३५ ॥
७८—मुखदैन्यविकासाभ्यां परदुःखसुखोहनम् ।
दैन्याद्यभावतो लोष्टे दुखाद्यूहो न संभवेत्॥३६॥
७९—स्वकीये सुखदुःखे तु नोहनीये ततस्तयोः ।
भावो वेद्योऽनुभूत्यैव तदभावोऽपि नान्यतः३७
८०-तथा सति सुषुप्तौ च दुःखाभावोऽनुभूतितः।
विरोधिदुःखराहित्यात्सुखं निर्विघ्नमिष्यताम् ३८

८१–[३९]महत्तरप्रयासेन मृदुशय्यादिसाधनम् ।
कुतः संपाद्यते सुप्तौ सुखं चेत्तत्र नो भवेत् ॥३९॥

८२–[४३]दुःखनाशार्थमेवैतदिति चेद्[४४]रोगिणस्तथा ।
भवत्वरोगिणस्त्वेतत्सुखायैवेति निश्चिनु ॥ ४० ॥

८३–[४७]तर्हि साधनजन्यत्वात्सुखं वैषयिकं भवेत् ।
[४९]भवत्येवात्र निद्रायाः पूर्वं शय्यासनादिजम्॥४१॥

८४–[५१]निद्रायां तु सुखं यत्तज्जन्यते केन हेतुना ।
[५४]सुखाभिमुखधीरादौ पश्चान्मज्जेत्परे सुखे ॥ ४२॥

८५[५७]जाग्रद्व्यापृत्तिभिः श्रांतो विश्रम्यार्थविरोधिनि
अपनीते स्वस्थचित्तोऽनुभवेद्विषये सुखम्॥४३॥

८६–[६०]आत्माभिमुखधीवृत्तौ स्वानंदः प्रतिबिंबति ।
अनुभूयैनमत्रापि त्रिपुट्या श्रांतिमाप्नुयात् ॥४४॥

८७–[६३]तच्छ्रमस्यापनुत्त्यर्थं जीवो धावेत्परात्मनि ।
तेनैक्यं प्राप्य तत्रत्यो ब्रह्मानंदः स्वयं भवेत्॥४५॥

८८–[६६]दृष्टांताः शकुनिः श्येनः कुमारश्च महानृपः ।
महाब्राह्मण इत्येते सुप्त्यानंदे श्रुतीरिताः ॥ ४६ ॥

८९-[६९]शकुनिः सूत्रबद्धः सन् दिक्षु व्यापृत्य विश्रमम्।
अलब्ध्वा बंधनस्थानं हस्तस्तंभाद्युपाश्रयेत् ॥४७॥
९०-[७१]जीवोपाधिमनस्तद्वद्धर्माधर्मफलाप्तये ।
स्वप्ने जाग्रति च भ्रांत्वा क्षीणे कर्मणि लीयते ॥४८
९१-[८१]श्येनो वेगेन नीडैकलंपटः शयितुं व्रजेत् ।
जीवः सुप्त्यै तथा धावेद्ब्रह्मानंदैकलंपटः ॥ ४९ ॥
९२-[८९]अतिबालः स्तनं पीत्वा मृदुशय्यागतो हसन्।
रागद्वेषाद्यनुत्पत्तेरानंदैकस्वभावभाक् ॥ ५० ॥
९३-[८९]महाराजः सार्वभौमः संतृप्तः सर्वभोगतः ।
मानुषानंदसीमानं प्राप्यानंदैकमूर्तिभाक् ॥५१॥
९४-[९१]महाविप्रो ब्रह्मवेदी कृतकृत्यत्वलक्षणाम् ।
विद्यानंदस्य परमां काष्ठां प्राप्यावतिष्ठते ॥५२॥
९५-[९४]मुग्धबुद्धातिबुद्धानां लोके सिद्धा सुखात्मता।
उदाहृतानामन्ये तु दुःखिनो न सुखात्मकाः॥५३
९६-[९७]कुमारादिवदेवायं ब्रह्मानंदैकतत्परः ।
[९०]स्त्रीपरिष्वक्तवद्वेद न बाह्यं नापि चांतरम् ॥५४॥

९७–[९३]बाह्यं रथ्यादिकं वृत्तं गृहकृत्यं यथांतरम् ।
तथा जागरणं बाह्यं नाडीस्थः स्वप्न आंतरः॥९५

९८–[९६]पितापि सुप्तावपितेत्यादौ जीवत्ववारणात् ।
सुप्तौ ब्रह्मैव नो जीवः संसारित्वासमीक्षणात् ९६

९९-[९९]पितृत्वाद्यभिमानो यः सुखदुःखाकरः स हि।
तस्मिन्नपगते तीर्णः सर्वाञ्छोकान्भवत्ययम् ॥९७

१२००–[१]सुषुप्तिकाले सकले विलीने तमसावृतः ।
सुखरूपमुपैतीति ब्रूते ह्याथर्वणी श्रुतिः ॥ ९८ ॥

१–[१]सुखमस्वाप्समत्राहं न वै किंचिदवेदिषम् ।
इति सुप्ते सुखाज्ञाने परामृशति चोत्थितः॥९९॥

२–[२]परामर्शोऽनुभूतेऽस्तीत्यासीदनुभवस्तदा ।
चिदात्मत्वात्स्वतो भाति सुखमज्ञानधीस्ततः ६०

३–[३]ब्रह्म विज्ञानमानंदमिति वाजसनेयिनः ।
पठंत्यतः स्वप्रकाशं सुखं ब्रह्मैव नेतरत् ॥ ६१ ॥

४–[४]यदज्ञानं तत्र लीनौ तौ विज्ञानमनोमयौ ।
तयोर्हि विलयावस्था निद्राऽज्ञानं च सैव हि ६२

९–[22] विलीनघृतवत्पश्चात्स्याद्विज्ञानमयो घनः ।
विलीनावस्थ आनंदमयशब्देन कथ्यते ॥ ६३ ॥

६–[25] सुप्तिपूर्वक्षणे बुद्धिवृत्तिर्या सुखबिंबिता ।
सैव तद्बिंबसहिता लीनानंदमयस्ततः ॥ ६४ ॥

७–[27] अंतर्मुखो य आनंदमयो ब्रह्मसुखं तदा ।
भुंक्ते चिद्बिंबयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः॥६५॥

८–[31] अज्ञानवृत्तयः सूक्ष्मा विस्पष्टा बुद्धिवृत्तयः ।
[33] इति वेदांतसिद्धांतपारगाः प्रवदंति हि ॥ ६६ ॥

९–[35] मांडूक्यतापनीयादिश्रुतिष्वेतदतिस्फुटम् ।
[37] आनंदमयभोक्तृत्वं ब्रह्मानंदे च भोग्यता ॥६७॥

१०–[39] ऐकीभूतः सुषुप्तस्थः प्रज्ञानघनतां गतः ।
आनंदमय आनंदभुक्चेतोमयवृत्तिभिः ॥ ६८ ॥

११–[42] विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराधुना ।
स लयेनैकतां प्राप्तो व्रीहितंडुलपिष्टवत् ॥ ६९ ॥

१२-अज्ञानानि पुरा बुद्धिवृत्तयोऽथ घनोऽभवत्।
घनत्वं हिमविंदूनामुदग्देशे यथा तथा ॥ ७० ॥

१३-तद्धनत्वं साक्षिभावं दुःखाभावं प्रचक्षते।
लौकिकास्तार्किका यावद्दुःखवृत्तिविलोपनात्॥७१

१४-अज्ञानविंविता चित्स्यान्मुखमानंदभोजने।
भुंक्तं ब्रह्मसुखं त्यक्त्वा वहिर्यात्यथ कर्मणा॥७२॥

१५-कर्म जन्मांतरेऽभूद्यत्तद्योगाद्बुद्ध्यते पुनः।
इति कैवल्यशाखायां कर्मजो वोध ईरितः॥७३॥

१६-कंचित्कालं प्रबुद्धस्य ब्रह्मानंदस्य वासना।
अनुगच्छेद्यतस्तूष्णीमास्ते निर्विषयः सुखी ॥७४

१७-कर्मभिः प्रेरितः पश्चान्नानादुःखानि भावयन्।
शनैर्विस्मरति ब्रह्मानंदमेषोऽखिलो जनः ॥७५॥

१८-प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने।
ब्रह्मानंदे नृणां तेन प्राज्ञोऽस्मिन्विवदेत कः॥७६

॥ २ ॥ तूष्णींस्थितौ ब्रह्मानंदभानाद्गुरुसेवादिसाधनाव्यर्थता वासनानंदविषयानंदावभिधायानंदत्रिविधता
॥ १२१९—१२३० ॥

१९ ननु तूष्णींस्थितौ ब्रह्मानंदश्चेद्भाति लौकिकाः।
अलसाश्चरितार्थाः स्युः शास्त्रेण गुरुणात्र किम् ७७

२०—इदं ब्रह्मेति विद्युश्चेत्कृतार्थास्तावतैव ते ।
गुरुशास्त्रे विनात्यंतगंभीरं ब्रह्म वेत्ति कः ॥७८॥

२१-जानाम्यहं त्वदुक्त्याद्य कुतो मे न कृतार्थता।
शृण्वत्र त्वादृशो वृत्तं प्राज्ञंमन्यस्य कस्यचित् ७९

२२—चतुर्वेदविदे देयमिति शृण्वन्नवोचत ।
वेदाश्चत्वार इत्येवं वेद्मि मे दीयतां धनम् ॥८०॥

२३—संख्यामेवैष जानाति न तु वेदानशेषतः
यदि तर्हि त्वमप्येवं नाशेषं ब्रह्म वेत्सि हि ८१॥

२४—अखंडैकरसानंदे मायातत्कार्यवर्जिते ।
अशेषत्वसशेषत्ववार्ताऽवसर एव कः ॥ ८२ ॥

२५–शब्दानेव पठस्याहो तेषामर्थं च पश्यसि ।
शब्दपाठेऽर्थबोधस्ते संपाद्यस्तेन शिष्यते ॥८३॥

२६-अर्थं व्याकरणाद्बुद्धे साक्षात्कारोऽवशिष्यते।
स्यात्कृतार्थत्वधीर्यावत्तावद्गुरुमुपास्व भोः ॥८४॥

२७–आस्तामेतद्यत्र यत्र सुखं स्याद्विषयैर्विना ।
तत्र सर्वत्र विद्ध्येतां ब्रह्मानंदस्य वासनाम् ८५

२८–विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ।
अंतर्मुखमनोवृत्तावानंदः प्रतिबिंबति ॥ ८६ ॥

२९–ब्रह्मानंदो वासना च प्रतिबिंब इति त्रयम् ।
अंतरेण जगत्यस्मिन्नानंदो नास्ति कश्चन ॥८७॥

३०–तथा च विषयानंदो वासनानंद इत्यमू ।
आनंदौ जनयन्नास्ते ब्रह्मानंदः स्वयंप्रभः ॥८८॥

## ॥ ३ ॥ वासनानंदनिजानंदकथनपूर्वकः क्षणिकसमाधिसंभवाद्ब्रह्मानंदनिश्चय-संभवः ॥ १२३१—१२७६ ॥

### १ ॥ जाग्रति वासनानंदसिद्धिपूर्वकमभ्यासात्प्रतीयमान-निजानंदकथनम् ॥ १२३१—१२६० ॥

३१-श्रुतियुक्त्यनुभूतिभ्यः स्वप्रकाशचिदात्मके ।
ब्रह्मानंदे सुप्तिकाले सिद्धे सत्यन्यदा शृणु ८९

३२—यँ आनंदमयः सुप्तौ स विज्ञानमयात्मताम् ।
गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ९०

३३—नेत्रे जागरणं कंठे स्वप्नः सुप्तिर्हृदंबुजे ।
आपादमस्तकं देहं व्याप्य जागर्ति चेतनः ॥९१॥

३४—देहतादात्म्यमापन्नस्तप्तायः पिंडवत्ततः ।
अहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते ॥ ९२ ॥

३५-उदासीनः सुखी दुःखीत्यवस्थात्रयमेत्यसौ ।
सुखदुःखे कर्मकार्ये त्वौदासीन्यं स्वभावतः॥९३॥

३६-बाह्यभोगान्मनोराज्यात्सुखदुःखे द्विधा मते ।
सुखदुःखांतरालेषु भवेत्तूष्णीमवस्थितिः ॥ ९४ ॥
३७ न कापि चिंता मेऽस्त्यद्य सुखमास इति ब्रुवन् ।
औदासीन्ये निजानंदभावं वक्त्यखिलो जनः ९५
३८—अहमस्मीत्यहंकारसामान्याच्छादितत्त्वतः ।
निजानंदो न मुख्योऽयं किंत्वसौ तस्य वासना ९६
३९—नीरपूरितभांडस्य वाह्ये शैत्यं न तज्जलम् ।
किंतु नीरगुणस्तेन नीरसत्तानुमीयते ॥ ९७ ॥
४०—यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः ।
तावत्तावत्सूक्ष्मदृष्टेर्निजानंदोऽनुमीयते ॥ ९८ ॥
४१—सर्वात्मना विस्मृतः सन्सूक्ष्मतां परमां व्रजेत् ।
अलीनत्वान्न निद्रैषा ततो देहोऽपि नो पतेत् ९९
४२-न द्वैतं भासते नापि निद्रा तत्रास्ति यत्सुखम् ।
स ब्रह्मानंद इत्याह भगवानर्जुनं प्रति ॥१००॥
४३—शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥१

४४—[१]यतो यतो निश्चरति मनश्चंचलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥१०२॥
४५—[२]प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥ १०३ ॥
४६—[३]यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति १०४
४७—[४]सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः १०५
४८-यं[१३] लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते १०६
४९—तं[१४] विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
सँ निश्चयेनयोक्तव्योयोगोऽनिर्विण्णचेतसा १०७
५०—[४५००]युंजन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ १०८ ॥
५१—[१]उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिंदुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ १०९ ॥

९२–बृहद्रथस्य राजर्षेः शाकायन्यो मुनिः सुखम्।
प्राहमैत्र्याख्यशाखायां समाध्युक्तिपुरःसरम् ११०
९३–यथा निरिंधनो वह्निः स्वयोनावुपशाम्यति।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति॥१११॥
९४–स्वयोनावुपशांतस्य मनसः सत्यकामिनः।
इंद्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥११२॥
९५-चित्तमेवं हि संसारस्तत्प्रयत्नेन शोधयेत्।
यच्चित्तस्तन्मयो मर्त्यो गुह्यमेतत्सनातनम्॥११३
९६-चित्तस्य हि प्रसादेन हंति कर्म शुभाशुभम्।
प्रसन्नात्मात्मनि स्थित्वा सुखमक्षय्यमश्नुते॥११४
९७–समासक्तं यथा चित्तं जंतोर्विषयगोचरे।
यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बंधनात् ११५
९८-मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च।
अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ११६
९९–मन एव मनुष्याणां कारणं बंधमोक्षयोः।
बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ११७

६०—³⁸समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदंतःकरणेन गृह्यते ॥ ११८ ॥

॥ २ ॥ मनुष्याणां क्षणिकसमाधिसंभवाद्ब्रह्मानंदनिश्चयसंभवः ॥ १२६१—१२७६ ॥

६१³⁹यद्यप्यसौ चिरं कालं समाधिर्दुर्लभो नृणाम् ।
तथापि क्षणिको ब्रह्मानंदो निश्चाययत्यसौ ११९
६२⁴³श्रद्धालुर्व्यसनी योऽत्र निश्चिनोत्येव सर्वथा ।
⁴⁶निश्चिते तु सकृत्तस्मिन्विश्वसित्यन्यदाप्ययम् १२०
६३⁴⁴तादृक् पुमानुदासीनकालेऽप्यानंदवासनाम् ।
उपेक्ष्य मुख्यमानंदं भावयत्येव तत्परः ॥ १२१ ॥
६४—⁴⁵परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।
तदेवास्वादयत्यंतः परसंगरसायनम् ॥ १२२ ॥
६५—⁴⁶एवं तत्त्वे परे शुद्धे धीरो विश्रांतिमागतः ।
तदेवास्वादयत्यंतर्बहिर्व्यवहरन्नपि ॥ १२३ ॥

६६–धीरत्वमक्षप्रावल्येऽप्यानंदास्वादवांछया ।
तिरस्कृत्याखिलाक्षाणि तच्चिंतायां प्रवर्तनम् १२४
६७-भारवाही शिरोभारं मुक्त्वास्ते विश्रमं गतः।
संसारव्यापृतित्यागे तादृग्बुद्धिस्तु विश्रमः १२५
६८–विश्रांतिं परमां प्राप्तस्त्वौदासीन्ये यथा तथा।
सुखदुःखदशायां च तदानंदैकतत्परः ॥१२६॥
६९–अग्निप्रवेशहेतौ धीः शृंगारे यादृशी तथा ।
धीरस्योदेति विषयेऽनुसंधानविरोधिनी॥१२७॥
७०–अविरोधिसुखे बुद्धिः स्वानंदे च गमागमौ।
कुर्वत्यास्ते क्रमादेषा काकाक्षिवदितस्ततः॥१२८॥
७१–एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः ।
यात्यायात्येवमानंदद्वये तत्त्वविदो मतिः॥१२९॥
७२–भुंजानो विषयानंदं ब्रह्मानंदं च तत्त्ववित् ।
द्विभाषाभिज्ञवद्विद्यादुभौ लौकिकवैदिकौ॥१३०॥
७३-दुःखप्राप्तौ न चोद्वेगो यथापूर्वं यतो द्विदृक् ।
गंगामग्नार्धकायस्य पुंसः शीतोष्णधीर्यथा॥१३१॥

७४–ईत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा।
भाति तद्वासनाजन्ये स्वप्ने तद्भासते तथा॥१३२॥

७५-अविद्यावासनाप्यस्तीत्यतस्तद्वासनोत्थिते।
स्वप्ने मूर्खवदेवैष सुखं दुःखं च वीक्षते॥१३३॥

७६–ब्रह्मानंदाभिधे ग्रंथे ब्रह्मानंदप्रकाशकम्।
योगिप्रत्यक्षमध्याये प्रथमेऽस्मिन्नुदीरितम्॥१३४॥

॥ इति ब्रह्मानंदगतयोगानंदः ॥ ११ ॥

# ॥ अथ ब्रह्मानंदगतात्मानंदः॥ १२ ॥

## ॥ १ ॥ आत्मानंदाधिकार्यात्मार्थं च सर्ववस्तुप्रियतापूर्वकमात्मनस्त्रिविधता ॥ १२७७—१३२६ ॥

### ॥ १ ॥ मंदबुद्ध्यधिकारिणमात्मानंदेन बोधनयोग्यता ॥ १२७७—१२८१ ॥

७७–ननु[९३]एवं वासनानंदाद्ब्रह्मानंदादपीतरम् ।
वेत्तु योगी निजानंदं मूढस्यात्रास्ति का गतिः ॥१

७८–धर्माधर्मवशादेष जायतां म्रियतामपि ।
पुनः पुनर्देहलक्षैः किन्नो दाक्षिण्यतो वद ॥ २ ॥

७९-अस्ति वोऽनुजिघृक्षुत्वाद्दाक्षिण्येन प्रयोजनम् ।
तर्हि ब्रूहि स मूढः किं जिज्ञासुर्वा पराङ्मुखः ३

८०–उपास्तिं कर्म वा ब्रूयाद्विमुखाय यथोचितम् ।
मंद[९६]प्रज्ञं तु जिज्ञासुमात्मानंदेन बोधयेत् ॥ ४ ॥

८१बोधयामास मैत्रेयीं याज्ञवल्क्यो निजप्रियाम् ।
न वा अरे पत्युरर्थे पतिः प्रिय इतीरयन् ॥५॥

॥ २ ॥ आत्मार्थं सर्ववस्तुप्रियताबोधकश्रुतितात्पर्य-
विभागः ॥ १२८२—१२९६ ॥

८२–[१२]पतिर्जाया पुत्रवित्ते पशुब्राह्मणबाहुजाः ।
लोका देवा वेदभूते सर्वं चात्मार्थतः प्रियम् ॥६॥
८३[१५]पत्याविच्छा यदा पत्न्यास्तदा प्रीतिं करोति सा
क्षुदनुष्ठानरोगाद्यैस्तदा नेच्छति तत्पतिः ॥ ७ ॥
८४-[१८]न पत्युरर्थे सा प्रीतिः स्वार्थ एव करोति ताम्।
[२१]पतिश्चात्मन एवार्थे न जायार्थे कदाचन ॥८॥
८५–[३४]अन्योऽन्यप्रेरणेऽप्येवं स्वेच्छयैव प्रवर्तनम्९
८६–[२७]श्मश्रुकंटकवेधेन बाले रुदति तत्पिता ।
चुंबत्येव न सा प्रीतिर्बालार्थे स्वार्थ एव सा १०
८७–[३०]निरिच्छमपि रत्नादि वित्तं यत्नेन पालयन्।
प्रीतिं करोति सा स्वार्थे वित्तार्थत्वं न शंकितम् ११

८८–[३२]अनिच्छति वलीवर्दे विवाहयिषते वलात् ।
प्रीतिः सा वणिगर्थैव वलीवर्दार्थता कुतः ॥१२॥

८९[३५]ब्राह्मण्यं मेऽस्ति पूज्योहमिति तुष्यति पूजया ।
अचेतनाया जातेर्नो संतुष्टिः पुंस एव सा॥१३॥

९०–[३८]क्षत्रियोऽहं तेन राज्यं करोमीत्यत्र राजता ।
[४१]न जातेर्वैश्यजात्यादौ योजनायेदमीरितम् ॥१४॥

९१–[४३]स्वर्गलोकब्रह्मलोकौ स्तां ममेत्यभिवांछनम् ।
लोकयोर्नोपकाराय स्वभोगायैव केवलम् ॥१५॥

९२–[४६]ईशविष्ण्वादयो देवाः पूज्यंते पापनष्टये ।
न तन्निष्पापदेवार्थं तत्तु स्वार्थं प्रयुज्यते ॥ १६ ॥

९३–[४८]ऋगादयो ह्यधीयंते दुर्ब्राह्मण्यानवाप्तये ।
न तत्प्रसक्तं वेदेषु मनुष्येषु प्रसज्यते ॥ १७ ॥

९४–[५१]भूम्यादिपंचभूतानि स्थानतृट्पाकशोषणैः ।
हेतुभिश्चावकाशेन वांछंत्येषां न हेतवे ॥ १८ ॥

९५–[५३]स्वामिभृत्यादिकं सर्वं स्वोपकाराय वांछति ।
तत्तत्कृतोपकारस्तु तस्य तस्य न विद्यते ॥१९॥

९६—सर्वव्यवहृतिष्वेवमनुसंधातुमीदृशम् ।
उदाहरणबाहुल्यं तेन स्वां वासयेन्मतिम् ॥२०॥

॥ ३ ॥ आत्मनि विद्यमानप्रीतिस्वरूपपूर्वकमात्मनः
प्रियतमता ॥ १२९७—१३०७ ॥

९७—अथ केयं भवेत्प्रीतिः श्रूयते या निजात्मनि ।
रागो वध्वादिविषये श्रद्धा यागादिकर्मणि॥२१॥
९८—भक्तिः स्याद्गुरुदेवादाविच्छा त्वप्राप्तवस्तुनि ।
तर्ह्यस्तु सात्त्विकी वृत्तिः सुखमात्रानुवर्तिनी॥२२॥
९९-प्राप्ते नष्टेऽपि सद्भावादिच्छातो व्यतिरिच्यते।
सुखसाधनतोपाधेरन्नपानादयः प्रियाः ॥ २३ ॥
१३००-आत्मानुकूल्यादन्नादिसमश्चेदमुनात्र कः।
अनुकूलयितव्यः स्यान्नैकस्मिन्कर्मकर्तृता ॥२४॥
१—सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रियः ।
सुखे व्यभिचरत्येषा नात्मनि व्यभिचारिणी २५
२—एकं त्यक्त्वान्यदादत्ते सुखं वैषयिकं सदा ।
नात्मा त्याज्यो न चोदेयस्तस्मिन्व्यभिचरेत्कथं २६

३–हानादानविहीनेऽस्मिन्नुपेक्षा चेत्तृणादिवत् ।
उपेक्षितुः स्वरूपत्वान्नोपेक्ष्यत्वं निजात्मनः ॥२७॥

४–रोगक्रोधाभिभूतानां मुमूर्षा वीक्ष्यते क्वचित् ।
ततो द्वेषाद्भवेत्त्याज्य आत्मेति यदि तन्न हि २८

५–त्यक्तुं योग्यस्य देहस्य नात्मता त्यक्तुरेव सा ।
न त्यक्तुर्यस्ति स द्वेषस्त्याज्ये द्वेषे तु का क्षतिः२९

६–आत्मार्थत्वेन सर्वस्य प्रीतेश्चात्मा ह्यतिप्रियः ।
सिद्धो यथा पुत्रमित्रात्पुत्रः प्रियतरस्तथा ॥३०॥

७–मा न भूवमहं किंतु भूयासं सर्वदेत्यसौ ।
आशीः सर्वस्य दृष्टेति प्रत्यक्षा प्रीतिरात्मनि ३१

॥ ४ ॥ आत्मनः पुत्रादिशेषतापूर्वकमात्मनस्त्रिविधता
॥ १३०८—१३२६ ॥

८-इत्यादिभिस्त्रिभिः प्रीतौ सिद्धायामेवमात्मनि ।
पुत्रभार्यादिशेषत्वमात्मनः कैश्चिदीरितम् ॥३२॥

९–एतद्विवक्षया पुत्रे मुख्यात्मत्वं श्रुतीरितम् ।
आत्मा वै पुत्रनामेति तच्चोपनिषदि स्फुटम्॥३३

१०सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते।
अथास्येतर आत्मायं कृतकृत्यः प्रमीयते ॥ ३४॥
११सत्यप्यात्मनि लोकोऽस्ति नापुत्रस्यात एव हि।
अनुशिष्टं पुत्रमेव लोक्यमाहुर्मनीषिणः ॥ ३५ ॥
१२–मनुष्यलोको जय्यः स्यात्पुत्रेणैवेतरेण नो।
मुमूर्षुर्मंत्रयेत्पुत्रं त्वं ब्रह्मेत्यादिमंत्रकैः ॥ ३६ ॥
१३–इत्यादिश्रुतयः प्राहुः पुत्रभार्यादिशेषताम्।
लौकिका अपि पुत्रस्य प्राधान्यमनुमन्वते॥३७॥
१४स्वस्मिन्मृतेऽपि पुत्रादिर्जीवेद्वित्तादिना यथा।
तथैव यत्नं कुरुते मुख्याः पुत्रादयस्ततः ॥ ३८॥
१५-बाढमेतावता नात्मा शेषो भवति कस्यचित्।
गौणमिथ्यामुख्यभेदैरात्मायं भवति त्रिधा ॥ ३९
१६–देवदत्तस्तु सिंहोऽयमित्यैक्यं गौणमेतयोः।
भेदस्य भासमानत्वात्पुत्रादेरात्मता तथा ॥४०॥
१७भेदोऽस्ति पंचकोशेषु साक्षिणो न तु भात्यसौ।
मिथ्यात्मतातःकोशानांस्थाणोश्चोरात्मतायथा४१

१८नं भाति भेदो नाप्यस्ति साक्षिणोऽप्रतियोगिनः।
सर्वांतरत्वात्तस्यैव मुख्यमात्मत्वमिष्यते ॥ ४२ ॥
१९–सत्येवं व्यवहारेषु येषु यस्यात्मतोचिता ।
तेषु तस्यैव शेषित्वं सर्वस्यान्यस्य शेषता ॥४३॥
२०–मुमूर्षोर्गृहरक्षादौ गौणात्मैवोपयुज्यते ।
न मुख्यात्मा न मिथ्यात्मा पुत्रः शेषी भवत्यतः ४४
२१–अध्येता वह्निरित्यत्र सन्नप्यग्निर्न गृह्यते ।
अयोग्यत्वेन योग्यत्वाद्बटुरेवात्र गृह्यते ॥ ४५ ॥
२२कृशोहं पुष्टिमाप्स्यामीत्यादौ देहात्मतोचिता ।
नै पुत्रं विनियुंक्तेऽत्र पुष्टिहेत्वन्नभक्षणे ॥ ४६ ॥
२३-तपसा स्वर्गमेष्यामीत्यादौ कर्त्रात्मतोचिता ।
अनपेक्ष्य वपुर्भोगं चरेत्कृच्छ्रादिकं ततः ॥४७॥
२४मोक्ष्येऽहमित्यत्र युक्तं चिदात्मत्वं तदा पुमान्।
तद्वेत्ति गुरुशास्त्राभ्यां न तु किंचिच्चिकीर्षति ४८
२५–विप्रक्षत्रादयो यद्वद्बृहस्पतिसवादिषु । व्य-
वस्थितास्तथा गौणमिथ्यामुख्या यथोचितम् ४९

२६—तंत्र[1] तत्रोचिते प्रीतिरात्मन्येवातिशायिनी ।
अनात्मनि तु तच्छेषे प्रीतिरन्यत्र नोभयम् ॥५०॥

॥ २ ॥ आत्मनः प्रियतमतासिद्धिः परमानंदतायाश्च सर्ववृत्त्यप्रतीतिपूर्वकं योगविवेकयोस्समता ॥ १३२७—१३६६ ॥

॥ १ ॥ प्रियतमप्रियोपेक्ष्यद्वेष्यवस्तूनां विवेको ज्ञानिनश्चैकस्यैव वचनस्य शिष्यप्रतिवादिनौ प्रति वरशापरूपतयात्मनः प्रियतमता ॥ १३२७—१३४८ ॥

२७—उपेक्ष्यं[20] द्वेष्यमित्यन्यद्द्वेधा मार्गतृणादिकम्[23] ।
उपेक्ष्यं व्याघ्रसर्पादि द्वेष्यमेवं[26] चतुर्विधम् ॥५१॥
२८—आत्मा[30] शेष उपेक्ष्यं च द्वेष्यं चेति चतुर्ष्वपि[31] ।
न[33] व्यक्तिनियमः किंतु तत्तत्कार्यात्तथा तथा ५२
२९ स्याद्व्याघ्रः[36] संमुखो द्वेष्यो ह्युपेक्ष्यस्तु पराङ्मुखः
लालनादनुकूलश्चेद्विनोदायेति शेषताम् ॥५३॥
३० व्यक्तीनां[39] नियमो माभूल्लक्षणात्तु व्यवस्थितिः।
आनुकूल्यं[43] प्रातिकूल्यं द्वयाभावश्च लक्षणम् ॥५४

३१[४५]आत्मा प्रियान्‌ प्रियः शेषो द्वेष्योपेक्ष्यें तदन्ययोः
इति व्यवस्थितो लोको [४८]याज्ञवल्क्यमतं च तत्‌ ५५

३२-[५१]अन्यत्रापि श्रुतिः प्राह पुत्राद्वित्तात्तथान्यतः।
सर्वस्मादांतरं तत्त्वं तदेतत्प्रेय ईक्षताम्‌ ॥ ५६ ॥

३३[५४]आत्या विचारदृष्ट्यायं साक्ष्येवात्मा न चेतरः।
[५७]कोशान्पंच विविच्यांतर्वस्तुदृष्टिर्विचारणा ॥५७

३४-[६०]जागरस्वप्नसुप्तीनामागमापायभासनम्‌ ।
यतो भवत्यसावात्मा स्वप्रकाशचिदात्मकः॥५८

३५[६३]शेषाः प्राणादिवित्तांता आसन्नास्तारतम्यतः।
[६६]प्रीतिस्तथा तारतम्यात्तेषु सर्वेषु वीक्ष्यते॥५९॥

३६-[६९]वित्तात्पुत्रः प्रियः पुत्रात्पिंडः पिंडात्तथेंद्रियम्।
इंद्रियाच्च प्रियः प्राणः प्राणादात्मा प्रियः परः ६०

३७-[७२]एवं स्थिते विवादोऽत्र प्रतिबुद्धविमूढयोः ।
श्रुत्योदाहारि [७४]तत्रात्मा प्रेयानित्येव निर्णयः॥६१

३८[७७]साक्ष्येव दृश्यादन्यस्मात्प्रेयानित्याह तत्त्ववित्‌
प्रेयान्‌ पुत्रादिरेवेमं भोक्तुं साक्षीति मूढधीः ६२

३९-आत्मनोऽन्यं प्रियं ब्रूते शिष्यश्च प्रतिवाद्यपि।
तस्योत्तरं वचो बोधशापौ कुर्यात्तयोः क्रमात् ६३
४०-प्रियं त्वां रोत्स्यतीत्येवमुत्तरं वक्ति तत्त्ववित्।
स्वोक्तप्रियस्य दुष्टत्वं शिष्यो वेत्ति विवेकतः ६४
४१-अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ ६५ ॥
४२-जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पंडिते ॥ ६६ ॥
४३-यूनश्च परदारादि दारिद्र्यं च कुटुंबिनः ।
पित्रोर्दुःखस्य नास्त्यंतो धनी चेन्म्रियते तदा ६७
४४-एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि
निश्चित्य परमां प्रीतिं वीक्षते तमहर्निशम् ॥६८॥
४५-आग्रहाद्ब्रह्मविद्वेषादपि पक्षममुंचतः ।
वादिनो नरकः प्रोक्तो दोषश्च बहुयोनिषु॥६९॥
४६-ब्रह्मविद्ब्रह्मरूपत्वादीश्वरस्तेन वर्णितम् ।
यद्यत्तत्तथैव स्यात्तच्छिष्यप्रतिवादिनोः ॥७०॥

४७–यैस्तु साक्षिणमात्मानं सेवते प्रियमुत्तमम् ।
तस्य प्रेयानसावात्मा न नश्यति कदाचन॥७१॥
४८–परप्रेमास्पदत्वेन परमानंद इष्यताम् ।
सुखवृद्धिः प्रीतिवृद्धौ सार्वभौमादिषु श्रुता ॥७२

॥ २ ॥ आत्मनः परमानंदतायाश्चेतनताया इव सर्ववृत्तिष्व-
प्रतीतिः ॥ १३४९—१३५५ ॥

४९–चैतन्यवत्सुखं चास्य स्वभावश्चेच्चिदात्मनः।
धीवृत्तिष्वनुवर्तेत सर्वास्वपि चितिर्यथा ॥७३ ॥
५०–मैवमुष्णप्रकाशात्मा दीपस्तस्य प्रभा गृहे ।
व्याप्नोति नोष्णता तद्वच्चितेरेवानुवर्तनम् ॥ ७४ ॥
५१–गंधरूपरसस्पर्शेष्वपि सत्सु यथा पृथक् ।
एकाक्षेणैक एवार्थो गृह्यते नेतरस्तथा ॥ ७५ ॥
५२-चिदानंदौ नैव भिन्नौ गंधाद्यास्तु विलक्षणाः।
इति चेत्तदभेदोऽपि साक्षिण्यन्यत्र वा वद ७६
५३-आद्ये गंधादयोऽप्येवमभिन्नाः पुष्पवर्तिनः ।
अक्षभेदेन तद्भेदे वृत्तिभेदात्तयोर्भिदा ॥ ७७ ॥

५४-सत्त्ववृत्तौ चित्सुखैक्यं तद्वृत्तेर्निर्मलत्वतः ।
रजोवृत्तेस्तु मालिन्यात्सुखांशोऽत्र तिरस्कृतः ७८

५५-तिंतिणीफलमत्यम्लं लवणेन युतं यदा ।
तदाम्लस्य तिरस्कारादीषदम्लं यथा तथा ७९

॥ ३ ॥ योगविवेकयोस्तुल्यता ॥ १३५६—१३६६ ॥

५६-ननु प्रियतमत्वेन परमानंदतात्मनि ।
विवेक्तुं शक्यतामेवं विना योगेन किं भवेत् ८०
५७-यद्योगेन तदेवेति वदामो ज्ञानसिद्धये ।
योगः प्रोक्तो विवेकेन ज्ञानं किं नोपजायते ८१
५८-यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
इति स्मृतं फलैकत्वं योगिनां च विवेकिनाम् ८२
५९-असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
इत्थं विचार्य मार्गौ द्वौ जगाद परमेश्वरः ॥ ८३ ॥

६०-योगे कोतिशयस्तत्र ज्ञानमुक्तं समं द्वयोः ।
रागद्वेषाद्यभावश्च तुल्यो योगिविवेकिनोः ॥८४

६१-न प्रीतिर्विषयेष्वस्ति प्रेयानात्मेति जानतः।
कुतो रागः कुतो द्वेषः प्रातिकूल्यमपश्यतः॥८५॥

६२-देहादेः प्रतिकूलेषु द्वेषस्तुल्यो द्वयोरपि।
द्वेषं कुर्वन्न योगी चेदविवेक्यपि तादृशः॥८६॥

६३-द्वैतस्य प्रतिभानं तु व्यवहारे द्वयोः समम्।
समाधौ नेति चेत्तद्वन्नाद्वैतत्वं विवेकिनः॥८७॥

६४-विवक्ष्यते तदस्माभिरद्वैतानंदनामके।
अध्याये हि तृतीयेऽतः सर्वमप्यतिमंगलम्॥८८॥

६५-सदा पश्यन्निजानंदमपश्यन्निखिलं जगत्।
अर्थाद्योगीति चेत्तर्हि संतुष्टो वर्द्धतां भवान्॥८९॥

६६-ब्रह्मानंदाभिधे ग्रंथे मंदानुग्रहसिद्धये।
द्वितीयाध्याय एतस्मिन्नात्मानंदो विवेचितः९०

॥ इति ब्रह्मानंदगतात्मानंदः समाप्तः॥१२॥

# ॥ अथ ब्रह्मानंदगताद्वैतानंदः ॥ १३ ॥

## ॥ १ ॥ ब्रह्मविवर्तस्य जगतो ब्रह्माभिन्नता-पूर्वकं शक्तितत्कार्यानिर्वचनीयता

## ॥ १३६७—१४१९ ॥

### ॥ १ ॥ आनंदरूपब्रह्मविवर्तस्य जगतो ब्रह्माभिन्नता

### ॥ १३६७—१३७६ ॥

६७योगानंदः पुरोक्तो यः स आत्मानंद इष्यताम्।
कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेच्छृणु ॥ १ ॥
६८—आकाशादिस्वदेहांतं तैत्तिरीयश्रुतीरितम् ।
जगन्नास्त्यन्यदानंदादद्वैतब्रह्मता ततः ॥ २ ॥
६९—आनंदादेव तज्जातं तिष्ठत्यानंद एव तत् ।
आनंद एव लीनं चेदुक्तानंदात्कथं पृथक् ॥३॥
७०—कुलालाद्धट उत्पन्नो भिन्नश्चेति न शंक्यताम्।
मृद्वदेष उपादानं निमित्तं न कुलालवत् ॥ ४ ॥

७१-स्थितिर्लयश्च कुंभस्य कुलाले स्तो न हि क्वचित्।
दृष्टौ तौ मृदि तद्वत्स्यादुपादानं तयोः श्रुतेः॥५॥
७२—उपादानं त्रिधा भिन्नं विवर्ति परिणामि च।
आरंभकं च तत्रांत्यौ न निरंशेऽवकाशिनौ॥६॥
७३-आरंभवादिनोऽन्यस्मादन्यस्योत्पत्तिमूचिरे।
तंतोः पटस्य निष्पत्तेर्भिन्नौ तंतुपटौ खलु॥ ७ ॥
७४—अवस्थांतरतापत्तिरेकस्य परिणामिता।
स्यात्क्षीरं दधि मृत्कुंभः सुवर्णं कुंडलं यथा॥८॥
७५—अवस्थांतरभानं तु विवर्तो रज्जुसर्पवत्।
निरंशेऽप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात्९
७६-ततो निरंश आनंदे विवर्तो जगदिष्यताम्।
मायाशक्तिः कल्पिका स्यादैंद्रजालिकशक्तिवत्१०

॥ २ ॥ धात्रीकथासहितं शक्त्यनिर्वचनीयता
॥ १३७७—१३९८ ॥

७७-शक्तिः शक्तात्पृथङ् नास्ति तद्वद्दृष्टेर्न चाभिदा।
प्रतिबंधस्य दृष्टत्वाच्छक्त्यभावे तु कस्य सः॥११॥

७८–शक्तेः कार्यानुमेयत्वादकार्ये प्रतिबंधनम् ।
ज्वलतोऽग्नेरदाहे स्यान्मंत्रादिप्रतिबंधता ॥ १२ ॥
७९–देवात्मशक्तिं स्वगुणैर्निगूढां मुनयोऽविदन् ।
परास्य शक्तिर्द्विविधा क्रियाज्ञानबलात्मिका १३
८०– इति वेदवचः प्राह वसिष्ठश्च तथाब्रवीत् ।
सर्वशक्ति परं ब्रह्म नित्यमापूर्णमद्वयम् ॥ १४ ॥
८१–ययोल्लसति शक्त्यासौ प्रकाशमधिगच्छति ।
चिच्छक्तिर्ब्रह्मणो राम शरीरेषूपलभ्यते ॥ १५ ॥
८२– स्पंदशक्तिश्च वातेषु दार्ढ्यशक्तिस्तथोपले ।
द्रव्यशक्तिस्तथांभःसु दाहशक्तिस्तथानले ॥१६॥
८३-शून्यशक्तिस्तथाकाशे नाशशक्तिर्विनाशिनि ।
यथांडेऽतर्महासर्पो जगदस्ति तथात्मनि ॥ १७ ॥
८४–फलपत्रलतापुष्पशाखाविटपमूलवान् ।
ननु बीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् १८
८५-क्वचित्काश्चित्कदाचिच्च तस्मादुद्यंति शक्तयः।
देशकालविचित्रत्वात्क्ष्मातलादिव शालयः ॥१९

८६–सं आत्मा सर्वगो राम नित्योदितमहावपुः।
यन्मनाङ् मननीं शक्तिं धत्ते तन्मन उच्यते २०

८७–आदौ मनस्तदनुबंधविमोक्षदृष्टी
पश्चात्प्रपंचरचना भुवनाभिधाना।
इत्यादिका स्थितिरियं हि गता प्रतिष्ठा
माख्यायिका सुभगवालजनोदितेव ॥२१॥

८८–बालस्य हि विनोदाय धात्री वक्ति शुभां कथाम्।
क्वचित्संति महावाहो राजपुत्रास्त्रयः शुभाः॥२२॥

८९-द्वौ न जातौ तथैकस्तु गर्भ एव न च स्थितः।
वसंति ते धर्मयुक्ता अत्यंतासति पत्तने ॥ २३ ॥

९०–स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः।
गच्छंतो गगने वृक्षान्ददृशुः फलशालिनः ॥२४॥

९१–भविष्यन्नगरे तत्र राजपुत्रास्त्रयोऽपि ते।
सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः॥२५॥

९२-धात्र्येतिकथितां राम वालकाख्यायिकां शुभा।
निश्चयं स ययौ वालो निर्विचारणया धिया २६

९३–[१७]इयं संसाररचना विचारोज्झितचेतसाम् ।
बालकाख्यायिकेवेत्थमवस्थितिमुपागता ॥२७॥

९४-[१९]इत्यादिभिरुपाख्यानैर्मायाशक्तेश्च विस्तरम् ।
वसिष्ठः कथयामास [२१]सैव शक्तिर्निरूप्यते ॥२८॥

९५–[२२]कार्यादाश्रयतश्चैषा भवेच्छक्तिर्विलक्षणा ।
[२५]स्फोटांगारौ दृश्यमानौ शक्तिस्तत्रानुमीयते ॥२९

९६–[२६]पृथुबुध्नोदराकारो घटः कार्योऽत्र मृत्तिका ।
शब्दादिभिः पंचगुणैर्युक्ता शक्तिस्त्वतद्विधा ॥३०

९७-[३१]न पृथ्वादिर्न शब्दादिः शक्तावस्तु[३३] यथा तथा ।
[३५]अत एव ह्यचिंत्यैषा [३८]न निर्वचनमर्हति ॥ ३१ ॥

९८-[४१]कार्योत्पत्तेः पुरा शक्तिर्निगूढा मृद्यवस्थिता ।
[४३]कुलालादिसहायेन विकाराकारतां व्रजेत् ॥३२॥

॥ ३ ॥ शक्तिकार्यानिर्वचनीयतानिरूपणम्

॥ १३९९—१४१९ ॥

९९[४६]पृथुत्वादिविकारांतं स्पर्शादिं चापि मृत्तिकाम् ।
एकीकृत्य घटं प्राहुर्विचारविकला जनाः ॥३३॥

१४००-कुलालव्यापृतेः पूर्वो यावानंशः स नो घटः
पश्चात्तु पृथुबुध्नादिमत्त्वे युक्ता हि कुंभता ॥३४॥
१-स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात्।
नाप्यभिन्नः पुरा पिंडदशायामनवेक्षणात् ॥३५॥
२-अतोऽनिर्वचनीयोऽयं शक्तिवत्तेन शक्तिजः।
अव्यक्तत्वे शक्तिरुक्ता व्यक्तत्वे घटनामभृत् ॥३६॥
३-ऐंद्रजालिकनिष्ठापि माया न व्यज्यते पुरा।
पश्चाद्गंधर्वसेनादिरूपेण व्यक्तिमाप्नुयात् ॥ ३७ ॥
४-एवं मायामयत्वेन विकारस्यानृतात्मताम्।
विकाराधारमृद्वस्तुसत्यत्वं चाब्रवीच्छ्रुतिः ॥३८॥
५-वाङ्निष्पाद्यं नाममात्रं विकारो नास्य सत्यता।
स्पर्शादिगुणयुक्ता तु सत्या केवलमृत्तिका ॥३९॥
६-व्यक्ताव्यक्ते तदाधार इति त्रिष्वाद्ययोर्द्वयोः।
पर्यायः कालभेदेन तृतीयस्त्वनुगच्छति ॥ ४० ॥
७-निस्तत्त्वं भासमानं च व्यक्तमुत्पत्तिनाशभाक्।
तदुत्पत्तौ तस्य नाम वाचा निष्पाद्यते नृभिः ४१

८—व्यँक्ते नष्टेऽपि नामैतन्नृवक्त्रेष्वनुवर्तते ।
तेर्नं नाम्ना निरूप्यत्वाद्व्यक्तं तद्रूपमुच्यते ॥४२
९—निर्स्तत्त्वत्वाद्विनाशित्वाद्वाचारंभणनामतः ।
व्यक्तस्य न तु तद्रूपं सत्यं किंचिन्मृदादिवत् ४३
१०—व्यँक्तकाले ततः पूर्वमूर्ध्वमप्येकरूपभाक् ।
सतत्त्वमविनाशं च सत्यं मृद्वस्तु कथ्यते ॥४४॥
११—व्यँक्तं घटो विकारश्चेत्येतैर्नामभिरीरितः ।
अर्थश्चेदनृतः कस्मान्न मृद्बोधे निवर्तते ॥ ४५ ॥
१२—निवृँत्त एव यँस्मात्ते तत्सत्यत्वमतिर्गता ।
ईदृँङ्निवृत्तिरेवात्र बोधजा न त्वभासनम् ॥४६॥
१३-पुँमांनधोमुखो नीरे भातोऽप्यस्ति न वस्तुतः।
तँटस्थमर्त्यवत्तस्मिन्नैवास्था कस्यचित्क्वचित् ॥४७
१४—ईदृँग्बोधे पुमर्थत्वं मतमद्वैतवादिनाम् ।
मृँद्रूपस्यापरित्यागाद्विवर्तत्वं घटे स्थितम् ॥ ४८ ॥
१५—परिणामे पूर्वरूपं त्यजेत्तत्क्षीररूपवत् ।
मृँत्सुवर्णे निवर्त्तेते घटकुंडलयोर्न हि ॥ ४९ ॥

१६–[१७]घटे भग्ने न मृद्भावः [१९]कपालानामवेक्षणात् ।
[२१]मैवं चूर्णेऽस्ति मृद्रूपं [२३]स्वर्णरूपं त्वतिस्फुटम् ॥५०॥
१७-[२५]क्षीरादौ परिणामोऽस्तु पुंसस्तद्भाववर्जनात् ।
[२७]एतावता मृदादीनां दृष्टांतत्वं न हीयते ॥ ५१ ॥
१८–[३०]आरंभवादिनः कार्ये मृदो द्वैगुण्यमापतेत् ।
[३३]रूपस्पर्शादयः प्रोक्ताः कार्यकारणयोः पृथक् ५२
१९–[३६]मृत्सुवर्णमयश्चेति दृष्टांतत्रयमारुणिः ।
[३९]प्राहातो वासयेत्कार्यानृतत्वं सर्ववस्तुषु ॥ ५३ ॥

## ॥ २ ॥ एककारणज्ञानात् कार्यसमूहज्ञानपूर्वकं ब्रह्मजगतोस्स्वरूपं जगदुपेक्षा च ॥ १४२०—१४५० ॥

### ॥ १ ॥ एककारणज्ञानात् कार्यसमूहज्ञानकथनम् ॥ १४२०—१४२७ ॥

२०[४३]कारणज्ञानतः कार्यविज्ञानं चापि सोऽवदत् ।
[४५]सत्यज्ञानेऽनृतज्ञानं कथमत्रोपपद्यते ॥ ५४ ॥

२१—सम्मृत्कस्य विकारस्य कार्यता लोकदृष्टितः ।
वास्तवोऽत्र मृदंशोऽस्य बोधः कारणबोधतः ५५

२२—अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः ।
तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् ॥५६॥

२३—तर्हि कारणविज्ञानात्कार्यज्ञानमितीरिते ।
मृद्बोधे मृत्तिकाबुद्धेत्युक्तं स्यात्कोत्र विस्मयः५७

२४—सत्यं कार्येषु वस्त्वंशः कारणात्मेति जानतः।
विस्मयो मास्त्विहाज्ञस्य विस्मयः केन वार्यते ५८

२५—आरंभी परिणामी च लौकिकश्चैककारणे ।
ज्ञाते सर्वमतिं श्रुत्वा प्राप्नुवंत्येव विस्मयम् ॥५९॥

२६—अद्वैतेऽभिमुखीकर्तुमेवात्रैकस्य बोधतः ।
सर्वबोधः श्रुतौ नैव नानात्वस्य विवक्षया ॥६०॥

२७—एकमृत्पिंडविज्ञानात्सर्वमृन्मयधीर्यथा ।
तथैकब्रह्मबोधेन जगद्बुद्धिर्विभाव्यताम् ॥६१॥

॥ २ ॥ ब्रह्मजगतोस्स्वरूपम् ॥ १४२८—१४४४ ॥

२८-सच्चित्सुखात्मकं ब्रह्म नामरूपात्मकं जगत् ।
तापनीये श्रुतं ब्रह्म सच्चिदानंदलक्षणम् ॥ ६२ ॥
२९—सद्रूपमारुणिः प्राह प्रज्ञानं ब्रह्म बह्वृचः ।
सनत्कुमार आनंदमेवमन्यत्र गम्यताम् ॥ ६३ ॥
३०-विचिंत्य सर्वरूपाणि कृत्वा नामानि तिष्ठति ।
अहं व्याकरवाणीमे नामरूपे इति श्रुतेः ॥६४॥
३१—अव्याकृतं पुरा सृष्टेरूर्ध्वं व्याक्रियते द्विधा ।
अचिंत्यशक्तिर्मायैषा ब्रह्मण्यव्याकृताभिधा॥६५
३२—अविक्रियब्रह्मनिष्ठा विकारं यात्यनेकधा ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ६६
३३आद्योविकारआकाशःसोस्तिभात्यपिचप्रियः
अवकाशस्तस्य रूपं तन्मिथ्या न तु तत्रयम्॥६७॥
३४—न व्यक्तेः पूर्वमस्त्येव न पश्चाच्चापि नाशतः।
आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा॥६८॥

३५-अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येवेत्याह कृष्णोऽर्जुनं प्रति॥६९॥
३६-मृद्वत्ते सच्चिदानंदा अनुगच्छंति सर्वदा।
निराकाशे सदादीनामनुभूतिर्निजात्मनि॥७०॥
३७-अवकाशे विस्मृतेऽथ तत्र किं भाति ते वद।
शून्यमेवेति चेदस्तु नाम तादृग्विभाति हि॥७१॥
३८-तादृक्त्वादेव तत्सत्त्वमौदासीन्येन तत्सुखम्।
आनुकूल्यप्रातिकूल्यहीनं यत्तन्निजं सुखम्॥७२॥
३९-आनुकूल्ये हर्षधीः स्यात्प्रातिकूल्ये तु दुःखधीः
द्वयाभावे निजानंदो निजदुःखं न तु क्वचित् ७३
४०-निजानंदे स्थिरे हर्षशोकयोर्व्यत्ययः क्षणात्।
मनसः क्षणिकत्वेन तयोर्मानसतेष्यताम्॥७४॥
४१-आकाशेऽप्येवमानंदः सत्ताभाने तु संमते।
वाय्वादिदेहपर्यंतं वस्तुष्वेवं विभाव्यताम्॥७५॥
४२-गतिस्पर्शौ वायुरूपं वह्नेर्दाहप्रकाशने।
जलस्य द्रवता भूमेः काठिन्यं चेति निर्णयः॥७६॥

४३–[53]असाधारण आकार औषध्यन्नवपुष्यपि ।
एवं विभाव्यं मनसा तत्तद्रूपं यथोचितम् ॥७७॥
४४–[54]अनेकधा विभिन्नेषु नामरूपेषु चैकधा ।
तिष्ठंति सच्चिदानंदा विसंवादो न कस्य चित्७८

॥ ३ ॥ फलसहितजगदुपेक्षा ॥ १४४५—१४५० ॥

४५–[55]निस्तत्त्वे नामरूपे द्वे [56]जन्मनाशयुते च ते ।
बुद्ध्या ब्रह्मणि वीक्ष्यस्व समुद्रे बुद्बुदादिवत् ॥७९
४६–[57]सच्चिदानंदरूपेऽस्मिन्पूर्णे ब्रह्मणि वीक्षिते।
स्वयमेवावजानंति नामरूपे शनैः शनैः ॥ ८० ॥
४७–[52]यावद्यावदवज्ञा स्यात्तावत्तावत्तदीक्षणम् ।
यावद्यावद्वीक्ष्यते तत्तावत्तावदुभे त्यजेत् ॥८१॥
४८–[58]तदभ्यासेन विद्यायां सुस्थितायामयं पुमान्।
जीवन्नेव भवेन्मुक्तो वपुरस्तु यथा तथा ॥८२॥
४९–[56]तच्चिंतनं तत्कथनमन्योऽन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ८३ ॥

५०–वासनानेककालीना दीर्घकालं निरंतरम् ।
सादरं चाभ्यस्यमाने सर्वथैव निवर्तते ॥ ८४ ॥

॥ ३ ॥ एकब्रह्मणो माययाऽनेकाकारता-
संभवपूर्वकं जगदनुस्यूतब्रह्मणो निर्ज-
गत्त्वम् ॥ १४५१—१४७१ ॥

॥ १ ॥ एकब्रह्मणो मायया ऽनेककार्याकारतासंभवः
॥ १४५१—१४५७ ॥

५१–मृच्छक्तिवद्ब्रह्मशक्तिरनेकाननृतान्सृजेत् ।
यद्वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनम्॥८५॥
५२–निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ।
ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यंतकारिणी ८६
५३–स्वप्ने वियद्गतिं पश्येत्स्वमूर्द्धच्छेदनं यथा ।
मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ ८७ ॥
५४–इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ।
यथा यथेक्ष्यते यद्यत्तत्तद्युक्तं तथा तथा ॥८८॥

८५–ईदृशो महिमा दृष्टो निद्राशक्तेर्यदा तदा ।
मायाशक्तेरचिंत्योऽयं महिमेति किमद्भुतम्॥८९॥
८६–शयाने पुरुषे निद्रा स्वप्नं वहुविधं सृजेत् ।
ब्रह्मण्येवं निर्विकारे विकारान्कल्पयत्यसौ॥९०॥
८७खानिलाग्निजलोर्व्यंडलोकप्राणिशिलादिकाः
विकाराः प्राणिधीष्वंतश्चिच्छाया प्रतिविंविता ९१

॥ २ ॥ जडचेतनरूपजगदनुस्यूतब्रह्मणः फलसहितं निर्जग त्वम् ॥ १४५८—१४७१ ॥

८८–चेतनाचेतनेष्वेषु सच्चिदानंदलक्षणम् ।
समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक् ॥९२॥
८९–ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ।
उपेक्ष्य नामरूपे द्वे सच्चिदानंदधीर्भवेत् ॥९३॥
९०-जलस्थेऽधोमुखे स्वस्य देहे दृष्टेऽप्युपेक्ष्य तम् ।
तीरस्थ एव देहे स्वे तात्पर्यं स्याद्यथा तथा ९४
९१–सहस्रशो मनोराज्ये वर्तमाने सदैव तत् ।
सर्वैरुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ ९५ ॥

६२–क्षणे क्षणे मनोराज्यं भवत्येवान्यथान्यथा ।
गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥९६॥

६३-न बाल्यं यौवने लब्धं यौवनं स्थाविरे तथा ।
मृतः पिता पुनर्नास्ति नायात्येव गतं दिनम्९७

६४-मनोराज्याद्विशेषः कः क्षणध्वंसिनि लौकिके।
अतोस्मिन्भासमानेऽपि तत्सत्यत्वधियं त्यजेत्९८

६५–उपेक्षिते लौकिके धीर्निर्विघ्ना ब्रह्मचिंतने ।
नैटवत्कृत्रिमास्थाय निर्वहत्येव लौकिकम् ॥९९॥

६६-प्रवहत्यपि नीरेऽधः स्थिरा प्रौढशिला यथा।
नामरूपान्यथात्वेऽपि कूटस्थं ब्रह्म नान्यथा १००

६७–निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत् ।
सच्चिद्घने तथा नानाजगद्गर्भमिदं वियत्॥१०१॥

६८–अदृष्ट्वा दर्पणं नैव तदंतस्थेक्षणं तथा ।
अमत्वा सच्चिदानंदं नामरूपमतिः कुतः ॥१०२॥

६९–[१६]एवमं सच्चिदानंदे भासमानेऽथ तावता ।
बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः॥१०३

७०–[१७]एवं च निर्जगद्ब्रह्म सच्चिदानंदलक्षणम् ।
अद्वैतानंद एतस्मिन्विश्राम्यंतु जनाश्चिरम् १०४

७१–[११]ब्रह्मानंदाभिधे ग्रंथे तृतीयोऽध्याय ईरितः ।
अद्वैतानंद एव स्याज्जगन्मिथ्यात्वचिंतया १०५

॥ इति ब्रह्मानंदगताद्वैतानंदः ॥ १३ ॥

# ॥ अथ ब्रह्मानंदगतविद्यानंदः ॥ १४ ॥

## ॥ १ ॥ विद्यानंदस्वरूपपूर्वकं तन्निवर्त्य-दुःखविभागः ॥ १४७२—१४८० ॥

### ॥ १ ॥ विद्यानंदस्वरूपं तदवांतरभेदश्च ॥ १४७२—१४७४ ॥

७२—योगेनात्मविवेकेन द्वैतमिथ्यात्वचिंतया ।
ब्रह्मानंदं पश्यतोऽथ विद्यानंदो निरूप्यते ॥१॥

७३—विषयानंदवद्विद्यानंदो धीवृत्तिरूपकः ।
दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥२॥

७४-दुःखाभावाश्च कामाप्तिः कृतकृत्योहमित्यसौ।
प्राप्तप्राप्योहमित्येव चातुर्विध्यमुदाहृतम् ॥ ३ ॥

### ॥ २ ॥ विद्यानिवर्त्यदुःखस्यात्मभेदसहितं स्वरूपम् ॥ १४७५—१४८० ॥

७५—ऐहिकं चामुष्मिकं चेत्येवं दुःखं द्विधेरितम् ।
निवृत्तिमैहिकस्याह बृहदारण्यकं वचः ॥ ४ ॥

७६–आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ५ ॥
७७-जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः।
चित्तादात्म्यात्रिभिर्देहैर्जीवः सन्भोक्तृतां व्रजेत् ६
७८-परात्मा सच्चिदानंदस्तादात्म्यं नामरूपयोः।
गत्वा भोग्यत्वमापन्नस्तद्विवेके तु नोभयम् ॥ ७ ॥
७९–भोग्यमिच्छन्भोक्तुरर्थे शरीरमनुसंज्वरेत् ।
ज्वरास्त्रिषु शरीरेषु स्थिता न त्वात्मनो ज्वराः ८
८०-व्याधयो धातुवैषम्ये स्थूलदेहे स्थिता ज्वराः।
कामक्रोधादयः सूक्ष्मे द्वयोर्बीजं तु कारणे ॥९॥

॥ २ ॥ दुःखनिवृत्तिसर्वकामावाप्तिलक्षणौ विद्यानंदावांतरभेदौ ॥ १४८१–१५०८ ॥

॥ १ ॥ दुःखाभावः ॥ १४८१—१४८८ ॥

८१-अद्वैतानंदमार्गेण परात्मनि विवेचिते ।
अपश्यन्वास्तवं भोग्यं किं नामेच्छेत्परात्मवित् १०

८२आत्मानंदोक्तरीत्यास्मिन्जीवात्मन्यवधारिते
भोक्ता नैवास्ति कोऽप्यत्र शरीरे तु ज्वरः कुतः ११
८३–पुण्यपापद्वये चिंता दुःखमामुष्मिकं भवेत् ।
प्रथमाध्याय एवोक्तं चिंता नैनं तपेदिति ॥१२॥
८४–यथा पुष्करपर्णेऽस्मिन्नपामश्लेषणं तथा ।
वेदनादूर्ध्वमागामिकर्मणोऽश्लेषणं बुधे ॥ १३ ॥
८५–ईषीकातृणतूलस्य वह्निदाहः क्षणाद्यथा ।
तथा संचितकर्मास्य दग्धं भवति वेदनात् ॥१४॥
८६- यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा॥१५॥
८७–यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वापि स इमाँल्लोकान्न हंति न निबध्यते॥१६॥
८८–मातापित्रोर्वधः स्तेयं भ्रूणहत्यान्यदीदृशम्।
न मुक्तिं नाशयेत्पापं मुखकांतिर्न नश्यति॥१७॥

॥ २ ॥ सर्वकामावाप्तिः ॥ १४८९—१५०८ ॥

८९—दुंःखाभाववदेवास्य सर्वकामाप्तिरीरिता ।
सर्वान्कामानसावाप्त्वा ह्यमृतोऽभवदित्यतः ॥१८

९०—जक्षन्क्रीडन् रतिं प्राप्तः स्त्रीभिर्यानैस्तथेतरैः ।
शरीरं न स्मरेत्प्राणः कर्मणा जीवयेदमुम् ॥१९॥

९१-सर्वान्कामान्सहाप्नोति नान्यवज्जन्मकर्मभिः ।
वर्तते श्रोत्रिये भोगा युगपत्क्रमवर्जिताः ॥ २० ॥

९२—युवा रूपी च विद्यावान्नीरोगो दृढचित्तवान् ।
सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन् ॥२१॥

९३—सर्वैर्मानुष्यकैर्भोगैः संपन्नस्तृप्तभूमिपः ।
यमानंदमवाप्नोति ब्रह्मविच्च तमश्नुते ॥ २२ ॥

९४—मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतः समा ।
भोगान्निष्कामतैकस्य परस्यापि विवेकतः ॥२३॥

९५—श्रोत्रियत्वाद्वेदशास्त्रैर्भोगदोषानवेक्षते ।
राजा बृहद्रथो दोषांस्तान्गाथाभिरुदाहरत् ॥२४

९६—देहदोषांश्चित्तदोषान्भोग्यदोषाननेकशः ।
शुनां वांते पायसे नो कामस्तद्वद्विवेकिनः ॥२५॥
९७—निष्कामत्वे समेऽप्यत्र राज्ञः साधनसंचये ।
दुःखमासीद्भाविनाशादिति भीरनुवर्तते ॥ २६ ॥
९८नोभयंश्रोत्रियस्यातस्तदानंदोऽधिकोऽन्यतः।
गंधर्वानंद आशास्ति राज्ञो नास्ति विवेकिनः२७
९९-अस्मिन्कल्पे मनुष्यः सन्पुण्यपाकविशेषतः ।
गंधर्वत्वं समापन्नो मर्त्यगंधर्व उच्यते ॥ २८ ॥
१५००-पूर्वकल्पेकृतात्पुण्यात्कल्पादावेवचेद्भवेत्।
गंधर्वत्वं तादृशोऽत्र देवगंधर्व उच्यते ॥ २९ ॥
१—अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ।
कल्पादावेव देवत्वं गता आजानदेवताः ॥३०॥
२—अस्मिन्कल्पेऽश्वमेधादि कर्म कृत्वा महत्पदम्।
अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः ३१
३—यमाग्निमुख्या देवाः स्युर्ज्ञाताविंद्रबृहस्पती ।
प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः ३२

४–[33]सार्वभौमादिसूत्रांता उत्तरोत्तरकामिनः ।
[34]अवाङ्मनसगम्योऽयमात्मानंदस्ततः परम्॥३३॥
५–[18]तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः ।
निस्पृहस्तेन सर्वेषामानंदाः संति तस्य ते ॥३४॥
६–[30]सर्वकामाप्तिरेषोक्ता [33]यद्वा साक्षिचिदात्मना ।
स्वदेहवत्सर्वदेहेष्वपि भोगानवेक्षते ॥ ३५ ॥
७–[35]अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः ।
[37]यो वेद सोऽश्नुते सर्वान्कामानित्यब्रवीच्छ्रुतिः३६
८-यद्वा सर्वात्मतां स्वस्य साम्ना गायति सर्वदा।
अहमन्नं तथान्नादश्चेति साम ह्यधीयते ॥ ३७ ॥

॥ ३ ॥ कृतकृत्यताप्राप्तप्राप्यतालक्षणौ
विद्यानंदावांतरभेदौ॥१५०९–१५३६॥

॥ १ ॥ कृतकृत्यता ॥ १५०९—१५२८ ॥

९– [33]दुःखाभावश्च कामाप्तिरुभे ह्येवं निरूपिते ।
कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्षताम्॥ ३८ ॥

१०—[35]उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम् ।
[36]त एवात्रानुसंधेयाः श्लोका बुद्धिविशुद्धये॥३९॥
११—[37]ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ।
वहु कृत्यं पुराऽस्याऽभूत्तत्सर्वमधुना कृतम् ४०
१२—[38]तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ।
अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ ४१ ॥
१३—[39]दुःखिनोऽज्ञाः संसरंतु कामं पुत्राद्यपेक्षया ।
परमानंदपूर्णोऽहं संसरामि किमिच्छया ॥४२॥
१४—[40]अनुतिष्ठंतु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ४३
१५-[41]व्याचक्षतां ते शास्त्राणि वेदानध्यापयं तु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ४४
१६—[42]निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयंति किं मे स्यादन्यकल्पनात् ४५
१७—[43]गुंजापुंजादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ ४६ ॥

१८-शृण्वंत्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहं।
मन्यंतां संशयापन्ना न मन्येऽहमसंशयः ॥ ४७॥
१९-विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्ययात्।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥४८॥
२०-अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम्।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥४९॥
२१-प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥५०॥
२२-विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥५१॥
२३-विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ५२
२४-नित्यानुभवरूपस्य को मे वानुभवः पृथक्।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥५३॥
२५-व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ ५४ ॥

२६-अथवा कृत्यकृत्योऽपि लोकानुग्रहकाम्यया।
शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ॥५५॥
२७-देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः।
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥५६॥
२८-विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम्।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये॥५७॥

॥ २ ॥ प्राप्तप्राप्यता ॥ १५२९—१५३६ ॥

२९-कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरंतरम्॥५८॥
३०-धन्योऽहंधन्योऽहंनित्यंस्वात्मानमंजसावेद्मि।
धन्योऽहंधन्योऽहंब्रह्मानंदो विभाति मेस्पष्टम् ५९
३१-धन्योऽहंधन्योऽहंदुःखंसांसारिकंनवीक्षेऽद्य।
धन्योऽहंधन्योऽहंस्वस्याज्ञानंपलायितंक्वापि॥६०॥
३२-धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित्।
धन्योऽहं धन्योहं प्राप्तव्यं सर्वमद्य संपन्नम्॥६१॥

३३–धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके।
धन्योऽहंधन्योऽहंधन्यो धन्यःपुनः पुनर्धन्यः ६२
३४–अहो पुण्यमहो पुण्यं फलितं फलितं दृढम्।
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ६३ ॥
३५–अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥६४॥
३६–ब्रह्मानंदाभिधे ग्रंथे चतुर्थोऽध्याय ईरितः।
विद्यानंदस्तदुत्पत्तिपर्यंतोऽभ्यास इष्यताम्॥६५

॥ इति ब्रह्मानंदगतविद्यानंदः ॥ १४ ॥

# ॥ अथ ब्रह्मानंदगतविषयानंदः ॥ १५ ॥

## ॥ १ ॥ सप्रपंचब्रह्मस्वरूपकथनम्

## ॥ १५३७–१५५७ ॥

### ॥ १ ॥ विषयानंदनिरूपणयोग्यतापूर्वकं तदुपाधिभूतवृत्तिविभागः ॥ १५३७—१५४० ॥

३७–[६५]अथात्र विषयानंदो ब्रह्मानंदांशरूपभाक् ।
निरूप्यते [६६]द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥ १ ॥

३८–[६७]एषोऽस्य परमानंदो योऽखंडैकरसात्मकः ।
अन्यानि भूतान्येतस्य मात्रामेवोपभुंजते ॥ २ ॥

३९-[७३]शांता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ।
[७६]वैराग्यं क्षांतिरौदार्यमित्याद्याः शांतवृत्तयः ॥३॥

४०–[७७]तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ।
संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥४॥

॥ २ ॥ उक्तसर्ववृत्तिषु चिदंशस्य प्रतिबिंबद्वारा भानं शांत-वृत्तिषु चानंदस्य प्रतिबिंबद्वारा भानम् ॥१५४१—१५४८॥

४१– वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ।
प्रतिबिंबति शांतासु सुखं च प्रतिबिंबति ॥५॥

४२– रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ।
उपमा सूर्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥

४३- एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ ७ ॥

४४– जले प्रविष्टश्चंद्रोऽयमस्पष्टः कलुषे जले ।
विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥

४५– घोरमूढासु मालिन्यात्सुखांशश्च तिरोहितः ।
ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिंबनम् ॥ ९ ॥

४६– यद्वापि निर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ।
न प्रकाशस्य तद्वत्स्याच्चिन्मात्रोद्भूतिरेव च ॥१०

४७– काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ।
शांतासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥

४८-वस्तुस्वभावमाश्रित्य व्यवस्था भूतयोः समा।
अनुभूत्यनुसारेण कल्प्यते हि नियामकम्॥१२॥

॥ ३ ॥ शांतघोरमूढवृत्तिषु क्रमात्सुखदुःखानुभवपूर्वकं ब्रह्मणः सदाद्यंशत्रयस्य व्यवस्थया कथनम् ॥१५४९—१५५७॥

४९—न घोरासु न मूढासु सुखानुभव ईक्ष्यते।
शांतास्वपि क्वचित्कश्चित्सुखातिशय ईक्ष्यताम्॥१३

५०—गृहक्षेत्रादिविषये यदा कामो भवेत्तदा।
राजसस्यास्य कामस्य घोरत्वात्तत्र नो सुखम्॥१४

५१—सिद्धयेन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्धते।
प्रतिबंधे भवेत्क्रोधो द्वेषो वा प्रतिकूलतः॥१५॥

५२अशक्यश्चेत्प्रतीकारो विषादः स्यात्स तामसः।
क्रोधादिषु महद्दुःखं सुखशंकापि दूरतः॥१६॥

५३-काम्यलाभे हर्षवृत्तिः शांता तत्र महत्सुखम्।
भोगे महत्तरं लाभप्रसक्तावीषदेव हि॥१७॥

५४—महत्तमं विरक्तौ तु विद्यानंदे तदीरितम्।
एवं क्षांतौ तथौदार्ये क्रोधलोभनिवारणात्॥१८॥

५५–[१८]यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिंबनात् ।
वृत्ति[२०]ष्वंतर्मुखास्वस्य निर्विघ्नं प्रतिबिंबनम् ॥१९॥
५६[२२]सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः।
मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्द्वयम् ॥ २०॥
५७–[२५]सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः ।
[२७]शांतवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थमीरितम्॥२१॥

## ॥ २ ॥ निष्प्रपंचब्रह्मज्ञानहेतुर्मायाविभाग-पूर्वकं च ब्रह्मविद्यारूपं ब्रह्मध्यानम् ॥

## ॥ १५५८—१५७१ ॥

### ॥ १ ॥ अमिश्रब्रह्मकथनपूर्वकं मायास्वरूपविभागः

### ॥ १५५८—१५६० ॥

५८–[३०]अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदीरितौ ।
[३१]आद्येऽध्याये योगचिंता [३३]ज्ञानमध्याययोर्द्वयोः २२
५९-[३५]असत्ता जाड्यदुःखे द्वे मायारूपं त्रयं त्विदम्।
असत्ता नरशृंगादौ जाड्यं काष्ठशिलादिषु २३

६०—घोरं[३८]मूढधियोर्दुःखमेवं मांया विजृंभिता ।
शांता[४३]दिबुद्धिवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्तितम् २४

॥ २ ॥ सवृत्तिकं त्रिविधमवृत्तिकमेकविधं ब्रह्मध्यानम्
॥ १५६१—१५६५ ॥

६१-एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत्पुमानसौ।
नृ[४६]शृंगादिमुपेक्षेत शिष्टं ध्यायेद्यथायथम् ॥ २५ ॥
६२-शिला[४८]दौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिंतनम् ।
त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद्विचिंतनम् २६
६३—शांता[५२]सु सच्चिदानंदांस्त्रीनप्येवं विचिंतयेत् ।
कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिंताः क्रमादिमाः २७
६४-मंदस्य व्यवहारेऽपि मिश्रब्रह्मणि चिंतनम् ।
उत्कृष्टं वक्तुमेवात्र विषयानंद ईरितः ॥ २८ ॥
६५-औदासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम्।
चिंतनं वासनानंदे ध्यानमुक्तं चतुर्विधम् ॥ २९॥

॥ ३ ॥ उक्तावृत्तिकध्यानस्य ब्रह्मविद्यात्वम्॥१५६६—१५७१॥

६६-[६३]नै ध्यानं ज्ञानयोगाभ्यां [६४]ब्रह्मविद्यैव सा खलु।
[६५]ध्यानेनैकाग्र्यमापन्ने चित्ते विद्या स्थिरीभवेत् ३०

६७-वि[६६]द्यायां सच्चिदानंदा अखंडैकरसात्मताम्।
प्राप्य भांति न भेदेन भेदकोपाधिवर्जनात् ३१

६८[६७]शांता घोराः शिलाद्याश्च भेदकोपाधयो मताः।
योगां[६८]द्विवेकतो वैषामुपाधीनामपाकृतिः ॥ ३२ ॥

६९-निरु[६९]पाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे।
अद्वैते त्रिपुटी नास्ति भूमानंदोऽत उच्यते॥३३॥

७०-[७०]ब्रह्मानंदाभिधे ग्रंथे पंचशोऽध्याय ईरितः।
विषयानंद एतेन द्वारेणांतः प्रवेश्यताम् ॥ ३४ ॥

७१-श्रीयां[७१]द्धरिहरोऽनेन ब्रह्मानंदेन सर्वदा।
पायाच्च प्राणिनः सर्वान्स्वाश्रितांश्छुद्धमानसान्॥

॥ इति ब्रह्मानंदगतविषयानंदः ॥ १९ ॥

## ॥ समाप्तोऽयं ग्रंथः ॥

# ॥ अथानुभूतिप्रकाशसारोद्धारः ॥

१—मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
इति श्रुत्यंतरे प्रोक्ता माया नान्यत्र तत्त्वतः॥१॥
निस्तत्त्वं व्यवहारार्हमनृतं बालयक्षवत् ।
बालो यक्षं प्रकल्प्यास्माद्बिभेति व्याघ्रतो यथा २
वस्तुतत्त्वं जडं किंचिन्नान्यदस्त्यात्मवस्तुनः ।
अद्वयानंदरूपात्मा तदा सुप्ताविव स्थितः ॥ ३ ॥
निस्तत्त्वापि जगद्भ्रांतिं माया निद्रेव कल्पयेद् ।
निर्विकारोऽप्यसावात्मा मायावृत्त्या व्यचारयत्४
तस्य हृत्कंठनेत्रेषु प्रचारवशतोऽभवत् ।
सुप्तिः स्वप्नो जागरश्च सोऽयं संसार ईरितः॥५॥
स्वप्नः सकाल एवास्ति नान्यदा स्वप्नजागरौ ।
तथैवेति स्वप्नसाम्यात्त्रयः स्वप्ना उदीरिताः॥६॥

अध्यारोपो मायिकोयमुक्तोऽथासावपोह्यते ।
अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते ॥७॥
स संसारीश्वरो जात ईश्वरानुग्रहात्पुनः ।
पृथिव्यादीनि भूतानि यथाशास्त्रं व्यचारयत् ॥८
परमात्मन उत्पन्नं जगदात्मैव नेतरत् ।
मृदो जातो घटो यद्वन्मृद्वस्त्वेव तथेक्ष्यताम् ॥९॥
घटः शराव इत्यादिविकाराणां मृदः पृथक् ।
तत्त्वं नास्ति प्रतीते तु नामरूपे प्रकल्पिते ॥१०॥
प्रतिबिंबभ्रमो नीराद्युपाधिवशतो यथा ।
सन्निवेशोपाधितोऽयं तथा कुंभादिविभ्रमः ॥११
भ्रांतिः सोपाधिकोपाधिनिवृत्त्यैव निवर्त्तते ।
न बोधात्तेन भासंते जानतोऽपि घटादयः॥१२॥
अद्वयानंदरूपात्मा सृष्टेः पूर्वमभूद्यथा ।
तथैवाद्यापि संपन्नो बुध्या सम्यग्विवेचितः॥१३
इयंतं कालमेतस्मिन्भ्रांत्या देहे निमग्नवान् ।
बोधेन देहादुत्क्रम्योत्कृष्टोऽभूज्जीवतां त्यजन्१४

जीवत्वेऽपगते तस्य शिष्यतेऽपरमात्मता ।
स एव स्वर्गतुल्योऽभूदिंद्रियाविषयत्वतः ॥१५॥
परोक्षोऽपि विमूढानां विद्वद्भिरवलोक्यते ।
सर्वेऽपि विषयानंदाः प्राप्ता दृष्टे निजात्मनि १६
आत्मानंदसमुद्रस्य विप्लुषो विषयोत्थिताः ।
आत्मन्यंतर्भवंत्यंते समुद्रे विंदवो यथा ॥ १७ ॥
आत्मन्यानंदमज्ञात्वा विषयेषु स्वविभ्रमात् ।
बाह्यमिच्छति तल्लाभाद्धीरात्मन्युपशाम्यति ॥१८
आत्मानंदं क्षणं भुक्त्वा पुनर्भ्रांत्या बहिर्व्रजेत् ।
विवेकधीर्निजानंदं भुंक्ते तत्स्थैव सर्वदा ॥१९॥
विषये दुःखजातं यत्तद्वीक्ष्यापक्षपाततः ।
शक्यो बोद्धुं निजानंदो बुध्यंते हि विवेकिनः२०
जगत्सृष्टिस्थितिलया ब्रह्मचैतन्यसाक्षिकाः ।
ब्रह्मचैतन्यरहिते वंध्यापुत्रे न संति ते ॥ २१ ॥
२—बहिर्दृष्टावपेतायामंतर्दृष्ट्या यदीक्ष्यते ।
निगूढं जीवचैतन्यं तद्ब्रह्मेति प्रपश्यति ॥ २२ ॥

मायाया विविधत्वेन तस्याः कार्येषु खादिषु ।
नामरूपेष्वनेकत्वं भात्यन्योऽन्यविलक्षणं ॥२३॥
भाति सर्वेषु सत्यत्वमेकं यद्ब्रह्मगं हि तत् ।
सर्वाधिष्ठानधर्मत्वात् तत्सर्वत्रानुगच्छति ॥ २४ ॥
सर्पधारादंडमाला रज्ज्वां याः परिकल्पिताः ।
एतासु रज्जुगं दैर्घ्यं सर्वास्वनुगतं यथा ॥ २५ ॥
व्योमाद्या देहपर्यंताः सत्ये ब्रह्मणि कल्पिताः ।
सर्वेष्वनुगतं ब्रह्म सत्यत्वं तस्य सुस्थितम्॥२६॥
अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते ।
इति न्यायेन देहांत आरोपः खादिरीरितः २७
न ब्रह्मणि मनोजन्यस्फूर्तिस्तस्मादगम्यता ।
मनस्यंतर्मुखे नश्येदविद्या तेन शक्तिता ॥ २८ ॥
शोकं तरत्यात्मबोधादिति श्रुत्यंतरे जगौ ।
शोकसागरमग्नोऽयं कर्त्ता तस्यात्मता न हि॥२९
आनंदस्यात्मता युक्ता सोऽत्रास्ति प्रीतिदर्शनात्।
सदा भूयासमेवेति नित्यं प्रेमात्मनीक्ष्यते॥३०॥

आनंदैकस्वभावोऽपि कर्तृविज्ञानसंगमात् ।
निजानंदं तिरस्कृत्य कदाचिच्छोकमाप्नुयात् ३१
समाधिसुप्तिमूर्छासु विज्ञानस्य लये सति। नित्या-
नंदस्वरूपेऽस्मिञ्च्छोकोऽल्पोऽपि न वीक्ष्यते ३२
मूढस्य मधुरादिः स्याद्रसो ब्रह्म विवेकिनः ।
मधुरादिशुगानंदी ब्रह्मविच्च तथा सुखी ॥ ३३ ॥
ऊर्ध्वाकारे समेऽप्यस्मिन् चोरदर्शी बिभेति हि ।
स्थाणुदर्शी निर्भयोऽतस्तत्त्वबोधः प्रयोजकः ३४
ज्ञातेऽपि कर्मकांडार्थे वेदांतार्थमजानतः ।
जन्मादिभीर्भवत्येव वाय्वादीनां यथा तथा ३५
वायुः सूर्यो वह्निरिंद्रो मृत्युश्चातीतजन्मनि ।
धर्मज्ञा अप्यतत्त्वज्ञा इदानीं बिभ्यतीश्वरात् ३६
सर्वे स्वस्वपदे तृप्ताः कामयंते न तत्पदम् ।
ज्ञानी तु दोषदृष्ट्यात्र निष्कामस्तैः समस्ततः ३७
३—सद्वस्तुन्येवमारोप्य संसारो मायया कृतः ।
अविचारकृतारोपनिवृत्त्यर्थं विचार्यताम् ॥३८॥

सन्मूलाः सकला देहा इदानीं च सति स्थिताः।
अंते सत्येव लीयंते विद्यात्सत्तत्त्वमद्वयम् ॥३९॥
यथा भूतातिरेकेण भौतिकं नैव विद्यते।
भूतानि च सतोऽन्यानि तथा नेत्युपपादितम्४०
अणुत्वं वस्तुनः प्रोक्तं यत्तत्सत्यमबाधनात्।
स्थूलत्वं मायया क्लृप्तं ज्ञानेनैतस्य बाधनात् ॥४१
अबाध्यो यः स एवात्मा सर्वस्य न तु कल्पितः।
श्वेतकेतो यदद्वैतं तदसि त्वं न मानवः ॥ ४२ ॥
चिच्छायावानहंकारोऽधीते वेदचतुष्टयम्।
त्वं तु साक्ष्येव तस्यातः सदसि त्वं न चेतरः४३
नानावृक्षरसैक्येन संपन्ने मधुनि स्थितः।
न बुध्यते रसोऽस्येति तथा सर्वलयान्न धीः४४
लवणस्य घनं नीरे विलीनं वेत्ति न त्वचा।
जिह्वया वेत्ति तद्वत्सदुपायेनैव बुध्यते ॥ ४५ ॥
सति सर्वेंद्रियागम्ये क उपायः स उच्यते।
उपाय उपदेशोऽत्र भवेद्गंधारमार्गवत् ॥ ४६ ॥

गंधाराद्यो वने नीतस्तस्करैर्बद्धनेत्रकः ।
तस्य बंधं विमुच्यात्र कृपालुर्मार्गमादिशत् ॥४७॥
तेनादिष्टमविस्मृत्य धीमान् गंधारमाप्तवान् ।
अविद्ययावृतं तत्त्वं वेत्त्येवमुपदेशतः ॥ ४८ ॥
४—नामाद्याशांततत्त्वेषु ब्रह्मदृष्टिं करोति यः ।
स पुमान् लभते सर्वं तत्रतत्रोचितं फलम् ॥४९॥
सुखं किमिति चेद्भूमा सुखमल्पे तु तन्न हि ।
क्लिश्यत्यल्पधनोऽन्यस्मिन्धनबाहुल्यदर्शनात् ५०
भूम्नः सुखत्वे भूमा कः किमल्पमिति चेच्छृणु ।
ज्ञातृज्ञेयज्ञानहीनो भूमाऽविच्छेददर्शनात् ॥५१॥
ज्ञातृज्ञानज्ञेयरूपं मायाकार्यमिदं जगत् ।
बहुविच्छेदयुक्तत्वादल्पमित्यभिधीयते ॥ ५२ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
भूमा तस्मादमर्त्योऽयमल्पं मर्त्यमतद्विधम् ॥५३॥
संसारकाल एवास्ति न मुक्तावल्पता ततः ।
मुक्तौ ज्ञाननिवर्त्यत्वान्मर्त्यं जगदितीर्यते ॥५४॥

अरणिस्थो यथावह्निर्न दहेदरणिं तथा ।
पश्चान्मथनजातोऽसौ साकल्पेनारणिं दहेत् ५५
तथा वेदांतवाक्योत्थधीवृत्तौ प्रतिबिंबितम् ।
स्वप्रकाशात्मचैतन्यं कृत्स्नाज्ञानस्य बाधकम् ५६
त्रिपुटी मायिकी मिथ्येत्येवं विज्ञाय तत्त्ववित् ।
तामुपेक्ष्य करोत्येव भूमानंदे भरं सदा ॥ ५७॥
यथा लोके निराधार आकाशोऽस्ति तथा कुतः।
भूमा न स्याद‍तो युक्त्या निराधारोऽपि बुध्यतां५८
व्यावहारिक आनंदे व्युत्पत्तेः शून्यता न हि ।
व्युत्पन्नो यौक्तिकश्चैष ऐकाग्र्ये भासते स्वयम्५९
बोधक्रमो बुभुत्सूनां विस्पष्टमभिधीयते ।
चतुर्दिक्ष्वध ऊर्ध्वं च भूमा बोद्धव्य आदितः६०
सत्ताभानप्रीतयोऽत्र वीक्ष्यंते सर्ववस्तुषु ।
सच्चिदानंदरूपोऽतो भूमा सर्वत्र तिष्ठति ॥६१॥
भूम्नो वियोगे वस्तूनि नैव संति न भांति च ।
प्रियत्वं दूरतस्तेषां भूमा सर्वात्मकस्ततः ॥६२॥

जगद्भ्रांतिं निवार्यास्य ताटस्थ्यविनिवृत्तये ।
अहंकारेण भूमानुसंधेयः सर्वदिक्ष्वसौ ॥ ६३ ॥
संत्येव सच्चिदानंदा देहादिष्वपि वाह्यवत् ।
भूमाहंकारयोग्योऽतोऽहं सर्वमिति वा श्रयेत् ६४
गृहैकदेशेऽवस्थाय सार्वभौमोऽहमित्यसौ ।
राजाभिमन्यते तद्वद्भूमाहमिति नो कुतः ॥६५॥
आभिमानिकमेवेदं भूमात्मत्वमिति भ्रमम् ।
निराकर्तुं सर्वदिक्षु भूम्नो ज्ञेया चिदात्मता ६६
अहं शब्दश्चिदात्मानं साहंकारं ब्रवीति हि ।
अहंकारे बोधलीने चिदात्मैवावशिष्यते ॥६७॥
क्रमेणानेन यस्तत्त्वं पश्यन् शास्त्रविचारतः ।
युक्त्या मत्वा धिया वेत्ति जीवन्मुक्तो भवेदसौ६८
तस्मात्प्राणादिवस्तूनां ध्यानेनास्य फलेन वा ।
जीवन्मुक्तस्य नार्थोऽस्ति कृतकृत्यः सुखी ह्यसौ६९
न मृत्युं पश्यति ज्ञानी न रोगं नापि दुःखिताम् ।
सर्वस्वात्मतया बुध्वा सर्वमाप्नोति सर्वथा ॥७०

५–ब्रह्मणो मरणाभावादमृतत्वं तदीर्यते ।
अद्वितीयतया भीतिहेत्वभावाच्च निर्भयम् ॥७१॥
सर्वज्ञेनोपदिष्टापि प्रतिबंधक्षयं विना ।
न लभ्यतेऽत्र दृष्टांतो विरोचन उदीरितः॥७२॥
६–दर्शनादिक्रियाः कुर्वन् यथापूर्वं य इंद्रियैः ।
सिध्यसिद्धी न जानाति जीवन्मुक्तः स उच्यते७३
आनंदरूपं हृत्कोशे यद्भाति प्राणिनां सदा ।
तच्छुभ्रं ज्योतिषां ज्योतिर्द्रष्टव्यं तन्मुमुक्षुभिः ७४
भासका अपि सूर्याद्यास्तद्भासयितुमक्षमाः ।
तस्मिन्नादौ भासमाने तद्भासा भासतेऽखिलं७५
सर्वासु दिक्षु तद्भाति तस्मिन्नंतर्भवत्यदः ।
जगत्ततः पृथङ्नास्ति तरंगादिर्जलाद्यथा ॥७६॥
जलतत्त्वं तरंगादौ ब्रह्मतत्त्वं तथाऽखिले ।
ततो ब्रह्मणि विज्ञाते विज्ञातं सकलं भवेत् ॥७७
अब्ध्यावस्तं यांति नद्यो नामरूपे विहाय हि ।
तथा विद्वान्नामरूपान्मुक्तो याति परं पदम् ॥७८

८—लोकत्रये बहुविधानसुरान् हतवानहम् ।
चिदात्मनोऽपि मे तत्र नैव लोमापि हिंस्यते७९
माहात्म्यं मम नैतत्स्यात्किंतु ज्ञानस्य तद्भवेत् ।
अन्योऽपि मां चिदात्मानं वेत्ति चेत्तत्फलं भवेत्८०
वाचा वा मनसा मातृवधादीन्कुरुते यदि ।
तथापि ज्ञानिनो मोक्षो न ह्येतैर्विनिवार्यते॥८१॥
पापं कृतवतोऽप्यस्य मुखे हर्षक्षयो न हि ।
न मुक्तिर्नश्यतीत्येवं शास्त्रैरस्य विनिश्चयात् ८२
ननु मूढस्यापि नास्ति चिन्मात्रे पापलेपनम् ।
ततः कोऽतिशयस्तत्त्वविदः स्यादिति चेच्छृणु८३
अहंकर्तृगतं पापमज्ञानादारोप्यते चिति ।
तेन ग्लानिर्मुखे भाति जन्मापि नरके भवेत् ८४
ज्ञानेन कर्मणस्तस्य बीजभावो विनश्यति ।
जन्मप्ररोहो नैवास्तीत्येवं निश्चित्य हृष्यति॥८५॥
दग्धबीजं यथा लोके न प्ररोहक्षमं तथा ।
ज्ञानाग्निदग्धं यत्कर्म न तज्जन्मप्रदं भवेत् ॥८६॥

तर्हि तत्त्वविदः श्रेष्ठा मूढवन्नियमेन तत् ।
कुतः पापं त्यजंतीति चेद्रहस्यमिदं शृणु ॥८७॥
यद्यप्यामुष्मिकी हानिर्नास्त्यथाप्यैहिकी तु सा ।
महती विद्यते तेन पापं यत्नेन वर्जयेत् ॥ ८८ ॥
शिष्टास्त्यजंति पापिष्ठं प्रत्यक्षो नरकः स हि ।
तन्निंदकस्तस्य पापं गृहीत्वा नरकं व्रजेत् ॥८९॥
स्तोता कर्मी तु संसर्गात्स्वयमप्याचरेत्तथा ।
इत्थं दोषत्रयं दृष्ट्वा शिष्टाः पापं त्यजंति हि ९०
किं च पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा ।
पश्चाच्च तद्वासनया पुण्यमेव करोत्यसौ ॥ ९१ ॥
किं बहूक्त्या तत्त्वविदो न भयं पारलौकिकम् ।
उपदेशसहस्र्यां च तथाचार्यैरुदीरितम् ॥ ९२ ॥
परलोकभयं यस्य नास्ति मृत्युभयं तथा ।
तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेंद्रा अपीश्वराः॥
दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यते ।
स्वप्नबोधात्स्वसंसारो लीयते स्वप्नवद्यतः॥९४॥

परप्रेमास्पदतया सर्वेषां यो विभात्यसौ ।
नित्यानंदपरात्मा स्याज्जरामरणवर्जितः ॥९५॥
न पुण्येन भवेद्देवो न पापेन पशुर्भवेत् ।
चिच्छायावानहंकार एव स्यात्पुण्यपापवान् ९६
तदीये पुण्यपापे द्वे देहस्थे च जरामृती ।
स्वात्मन्यारोपयेन्मूढस्ततो देवादिजन्मभाक् ९७
आरोपे बाधिते बोधात्कर्म स्याद्दग्धबीजवत् ।
ततो जन्मांकुरो नास्ति निर्लेपे परमात्मनि॥९८॥
९—अंतर्बहिर्वा कः शत्रुर्मम सर्वात्मदर्शिनः ।
ब्रह्माद्याः स्थावरांता ये प्राणिनो मम ते वपुः९९
१०दुःखी यदि भवेदात्मा कःसाक्षी दुःखिनो भवेत्
दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा ॥
नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः
धीविक्रियासहस्राणां साक्ष्यतोहमविक्रियः१०१
कुलालेन यथा चक्रं तथा मायाविना गुणाः ।
सत्वादयः प्रेरिताः स्युस्तैश्च जन्मान्यनेकधा१०२

लोहे मुद्गरघातेन नाग्नेर्बाधस्तथा गुणैः ।
भूतात्मोपद्रवेणास्य साक्षिणो नास्त्युपद्रवः १०३
११ अविश्वासात्कुतर्काद्वा शिष्यो बोद्धुं न शक्नुयात्।
ईश्वरानुग्रहाद्देवा विहंतुं शक्नुवंति नो ॥ १०४ ॥
सहनावित्यादिशांतिजपेनेशप्रसादतः ।
निर्विघ्नौ गुरुशिष्यौ स्तस्तादृशौ दुर्लभौ खलु १०५
शब्दार्थज्ञः स्वात्मतत्त्वानुभवी च गुरुर्द्विधा ।
आद्यो नरो न तु ब्रह्म नरत्वभ्रांत्यनाशनात् १०६
तेनोक्ते संशया एव स्युर्वाचा वहुयोजनात् ।
ब्रह्मैवानुभवी तेन ब्रह्म प्रोक्तं विबुध्यते॥१०७॥
कुतर्कान्नश्यते विद्या तार्किको न गुरुस्ततः ।
आगमे चानुभूतौ च कुशलोऽत्र गुरुर्भवेत् १०८
शिष्यो वहिर्मुखो न स्यादध्यात्मं योगमाचरन् ।
दुर्दशत्वादिसंयुक्तमप्यात्मानं प्रपश्यति ॥१०९॥
यच्चैतन्यानुग्रहेण रूपादीनिंद्रियैः पुमान् ।
जानाति येन स्वप्नादि दृश्यते तद्विविच्यतां ११०

चैतन्येन जडं ज्ञेयमित्युक्ते शिष्यतेऽत्र किम् ।
अज्ञानं निखिलं प्रज्ञं चैतन्यं ब्रह्म वस्तु हि१११
यद्देहेऽस्ति तदेवेषु वेदेषु ब्रह्म गीयते ।
मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ११२
मनसैवेदमाप्तव्यमेकाग्रेणेशजीवयोः ।
तत्त्वमद्वैतमेतस्मिन्योगी भेदं न पश्यति ॥११३॥
सुप्तेष्वक्षेषु यः स्वप्ने कामं कामं सृजत्यजम् ।
देहातिरिक्तस्तं को वा निराकर्तुं प्रभुर्भवेत् ११४
स्वचित्तस्थं साक्षिरूपमीशं पश्यंति ये नराः ।
तेषां नित्या दुःखशांतिर्ब्रह्मानंदश्च शाश्वतः११५
अनिर्देश्यं तमानंदं प्रत्यक्षं मन्वते बुधाः ।
सदृशो वा स्वप्रकाश इति चेन्न स दृश्यते॥११६॥
न भासयंति सूर्याद्या बुद्ध्याद्याश्च स्वयंप्रभम् ।
किंतु भांतं तमन्वेते भांति भासा तदीयया ११७
इंद्रियाणामनात्मत्वमागमापायदर्शनात् । बुध्वा
तत्साक्षिणि स्वस्मिन् ब्रह्मत्वं बुध्यते सुखात् ११८

सर्वाक्षागोचरत्वेऽपि स्वात्मास्तीत्याह तत्त्ववित् ।
कारणस्यात्मनोऽसत्त्वे शून्यं कार्यं जगद्भवेत् ११९
अस्तीत्येवोपलब्धव्यो नायमस्तीति न त्वया ।
सर्वत्रानुगतं यत्तत्तन्नास्तीत्युच्यते कथम् ॥१२०॥
सोपाधिकं तावदादौ दृष्ट्वास्तीति ततः पुनः ।
उपाधीन्संपरित्यज्य तत्त्वभावेन पश्यति ॥१२१॥
१२अनिर्वाच्येऽपि युक्तिं चेदन्विच्छति स मूढधीः।
न रूपं चक्षुषा द्रष्टुमिच्छत्येवातिमोहितः॥१२२॥
सर्वकार्येषु शक्तत्वान्मायाक्षेपं न सार्हति ।
दुर्घटस्यैव घटने स्वभावः सर्वसंमतः ॥ १२३ ॥
यस्मात्परं नापरं वा किंचिदस्ति तदद्वयम् ।
वृक्षवन्निश्चलं तेन पूर्णं सर्वमिदं जगत् ॥ १२४॥
निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनम् ।
भजे स्वयं भासमानं तं दग्धेंधनवह्निवत् ॥१२५॥
निष्कलोऽवयवैर्हीनो हेतुहीनो निरंजनः ।
निरंधनाग्निसाम्यं तु मायातत्कार्यवर्जनात् ॥१२६

तादृशं परमात्मानं विदित्वैव विमुच्यते । विना
ज्ञानं न मुक्तिः स्यादितरैः कोटिसाधनैः॥१२७॥
वेदांते परमं गुह्यं नानोपाख्यानवर्णितम् ।
नाऽप्रशांताय दातव्यं देयं शिष्याय धीमते१२८
१३—ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् ।
अतोऽवबोधादेवास्य भयं वीयाय सर्वतः १२९
कस्माद्भेष्यदीशोऽयं द्वितीयात्खलु तद्भयम् ।
द्वितीयो नेश्वरस्यास्ति ततो निर्भय एव सः१३०
न चिद्वस्तु विवादार्हं तेन सर्वार्थसिद्धितः ।
अज्ञोऽहमित्यविद्यापि प्रसिद्धैवानुभूतितः॥१३१
स्वयंप्रकाश आत्मैवं नोपलभ्योऽनुपाधिकः ।
जडदेहाद्युपाधौ तु विस्पष्टमुपलभ्यते ॥ १३२ ॥
यतिदीक्षितचोरादिभूमिकां धारयेन्नटः ।
तत्र दृष्टे दीक्षितेऽन्ये द्रष्टा यत्यादयो न हि१३३
स्वस्वरूपं तिरोधातुं न हि केनापि शक्यते ।
विस्फार्यतामिहाक्षाणि किमक्षैरपराध्यते॥१३४॥

न परोक्षत्वमाशंक्यं स्वस्वरूपत्वहेतुतः ।
शब्दादितत्त्वं यद्बोद्धुः स्वरूपं तन्न चेतरत् १३५
अव्याकृतव्याकृतयोरज्ञातात्मकता यतः ।
अतआत्मातिरेकेण नाज्ञातार्थोऽस्ति कश्चन १३६
ज्ञेयार्थानंदयोर्यस्मात्समाप्तिः प्रत्यगात्मनि ।
परमः पुरुषार्थोऽत आत्मा भवति नेतरः॥१३७
एकं पादं यथाऽश्वस्य दृष्ट्वाऽश्वत्वमशेषतः ।
दृष्टवानेव भवति दृष्टोऽश्व इति वर्णनात्॥१३८॥
एवं स्वदेहमात्रस्थे साक्षितत्त्वेऽवलोकिते ।
अशेषजगतस्तत्त्वं लभ्येतैव न संशयः ॥ १३९ ॥
अनात्मा प्रिय इत्येवं यो मुह्यति स पामरः ।
विनाशित्वमुदाहृत्य मूढं तं बोधयेद्बुधः ॥१४०॥
अनात्मा भोगकालेऽस्य सुखं यावत्प्रयच्छति ।
तत्सहस्रगुणं दुःखं नाशकाले प्रयच्छति॥१४१॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
व्युत्थाय विषयेभ्यस्तां प्रतीच्येव निवेशयेत्१४२

विषया इव न प्रत्यक्कदाचिदपि नश्यति ।
अतो दुःखप्रदत्वं तु शंकितुं न च शक्यते ॥१४३
त्याज्यमाने तु देहादावात्मैवैकोऽवशिष्यते ।
परित्यक्तुमशक्यत्वादात्मानं निह्नुतेऽत्र कः॥१४४
स्वतः सर्वात्मकं ब्रह्म भात्यसर्वमिव भ्रमात् ।
विद्यया भ्रांतिबाधेऽस्य सर्वत्वमवशिष्यते॥१४५
ब्रह्म वा इदमग्रेऽभूदिति विद्याधिकारिता ।
श्रूयते ब्रह्मणो ब्रह्म सर्वजातिषु तत्समम्॥१४६॥
न पश्वादेः सर्वभावप्रसंगो बोधवर्जनात् ।
शूद्रजातिश्च विदुरः सति बोधे विमुच्यते॥१४७
यागविद्येवात्मविद्या नानुष्ठानमपेक्षते ।
फलदान इति ज्ञेयं वामदेवनिदर्शनात्॥१४८॥
अनात्मविन्महत्पुण्यमश्वमेधादिकं यदि ।
कुर्यान्नित्यफलायैतदथाप्यंते विनश्यति ॥१४९॥
कृतस्य हि क्षयोऽवश्यं कोष्ठागारादिवद्भवेत् ।
न मोक्षायादरस्तस्माच्छ्रुतावज्ञानकर्मणोः॥१५०

किंतु जीवन्मुक्तिकाले बोधहेयं विवेचितम् ।
मुक्तिस्तु विद्यासूत्रेण सूचिता स्याद्विचारतः १५१
आत्मानमेव निर्द्वंतं स्वप्रभं प्रविचारयेत् ।
विचारयति यस्तस्य फलं न क्षीयते क्वचित् १५२
१४—दुःखं रागद्वेषजन्यं तदभावे सुखं स्वतः ।
इति व्याप्तिग्रहीत्यर्थं बहुदृष्टांतवर्णनम् ॥ १५३ ॥
अद्वयानंदरूपत्वमित्थं सुप्तौ प्रदर्शितम् ।
एतावता स्वभावोऽस्य निर्णीतः प्रत्यगात्मनः १५४
एतद्वस्तु स्वतः सिद्धं प्रमात्राद्यनपेक्षतः ।
सर्वस्यैव ततः सिद्धेः कथं सिद्ध्येत्तदन्यतः १५५
तदित्थं नेति नेतीति वाक्यं ब्रह्मात्मबोधकम् ।
जीवेशोपाधिनिन्हुत्या लक्ष्याखंडावसानतः १५६
इत्येवमनिदंरूपं ब्रह्मणः प्रतिपादितम् ।
निर्नाम्नस्तस्य नामैतत्सत्यसत्यमिति श्रुतम् १५७
१५—नन्वहंप्रत्ययेनात्मा वेदांतश्रवणात्पुरा ।
विज्ञात इति चेन्मैवं सार्वात्म्यानवबोधनात् १५८

लिंगदेहपरिच्छिन्नरूपग्राहिण्यहंमतिः ।
सार्वात्म्यमात्मनस्तत्त्वं तदज्ञातमहंधिया॥१५९॥
सर्वास्पनिषत्स्वेतत्सार्वात्म्यं प्रतिपाद्यते ।
कार्यज्ञेयसमाप्तिः स्यात्सार्वात्म्यस्यावबोधतः६०
यदस्ति तन्न जानाति यन्नेहास्ति तदीक्षते ।
इत्येवमपराधोऽस्य विद्यते भेददर्शिनः ॥१६१॥
योऽन्यथा संतमात्मानमन्यथा प्रतिपादयेत् ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा १६२
मुक्तस्य व्यवहारस्तु भ्रांतिवासनया कृतः ।
भ्रांतिनाशेऽपि संस्कारानुवृत्तिर्दृश्यते खलु१६३
वासनामात्रसंज्ञा तु देहे सति न वार्यते ।
वस्तुत्वभ्रांतिसंज्ञैव प्रबुद्धस्यात्र वार्यते ॥१६४॥
१६—आत्मा द्रष्टव्य इत्युक्तममृतत्वेन वर्णनम् ।
नेति नेत्युदितं ब्रह्म तत्सर्वमभवत्त्विति ॥१६५॥
१७आत्मनो ब्रह्मता मुख्या ब्रह्मणोप्यात्मता तथा
प्रत्यग्दृष्ट्या पराग्दृष्ट्या मिथो ब्रह्मात्मनोर्भिदा१६६

व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः ।
साक्षिणो व्यभिचारस्तु तथा किं साक्षिको भवेत् ॥
वेद्मीति यद्बलाद्वक्ति न वेद्मीति च यद्बलात् ।
योगिनोऽनुभवंत्येतमगोचरतयैव हि ॥ १६८ ॥
नन्वेक आत्मा मूढानां विदुषां चेति ते मतम् ।
उक्तोर्मिषट्कातीतत्वं तद्वत्त्वं चास्य तत्कथम्॥१६९
अविचारविचाराभ्यां यथा सर्पत्वरज्जुते ।
तथात्मन्यपि संसारभावाभावावितीक्षताम् १७०
प्रशांतवृत्तिके चित्ते परमानंददीपके ॥
कृतकृत्यो ब्रह्मभावं गतो ब्राह्मण उच्यते॥१७१
दृष्टिश्रुतिमतिज्ञातिविषयत्वं चिदात्मनः ।
उपस्तब्राह्मणे पूर्वं युक्त्या सम्यङ्निवारितम् १७२
मा गोचरातिवर्तित्वान्मातृमानादिसाक्षिणः ।
द्रष्टुरन्यस्य चाभावान्न तं पश्यंति देवताः॥१७३
अदृष्टत्वाश्रुतत्वादि प्रत्यग्ध्वांतेऽपि संभवेत् ।
तन्निवृत्त्यै श्रुतिर्द्रष्टा श्रोता मंतेत्यभाषत ॥१७४॥

द्रष्टृत्वश्रोतृताद्यस्य दृष्टिश्रुत्यादिसाक्षिता ।
अलुप्तचित्स्वभावत्वान्न विकारो मनागपि ॥१७५
क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्म भण्यते ।
कार्यकारणरूपं तु नश्वरं क्षरमुच्यते ॥ १७६ ॥
१८—स्वप्रकाशस्वरूपत्वाद्व्यवहारो ह्यतिस्फुटः ।
तथाप्यविद्यया छन्नः सोऽस्पष्ट इव वर्तते॥१७७
एतादृश्या अविद्याया विचारेण निवृत्तये ।
आत्मैव ज्योतिरस्येति प्राह स्वप्नावभासकम्१७८
भास्यं स्वप्नसुषुप्त्यादि यस्मिन्भानं प्रकल्पितम् ।
तद्भानं तत्स्वरूपत्वादात्मशब्देन भण्यते॥१७९॥
साभासपरिणामेन दुःख्यस्मीत्यपि धीर्भवेत् ।
तथा साभासमज्ञानं न वेद्मीत्यनुभूयते ॥१८०॥
अन्यथात्मनि कौटस्थ्याद्बुद्धौ चैतन्यवर्जनात् ।
सर्वोऽपि व्यवहारः स्यादंधकारप्रवृत्तवत् ॥१८१
नाप्रमेयत्वमात्रेण शशशृंगादितुल्यता ।
अनन्यानुभवेनास्य विशदं स्फुरणं यतः॥१८२॥

स्यात्स्वप्नव्यवहारोऽयमात्मना ज्योतिषा दृशा ।
देहादिव्यतिरिक्तत्वमेवं सिद्धं चिदात्मनः॥१८३
जाड्यमात्मन इच्छंति कणभुङ्मतजीविनः ।
तेषां विप्रतिषेधार्थं ज्योतिरित्यभिधीयते ॥१८४
जडबुध्याद्युपादानं तमस्तस्यावभासकम् ।
सकृद्विभातं चिन्मात्रं ज्योतिरात्मेति भण्यते१८५
अचेतनोऽपि बुध्यादिश्चेतनावानिवेक्ष्यते ।
यस्य सन्निधितस्तस्यंचिज्ज्योतिष्ट्वमितिस्फुटम् ॥
तमेव भांतमात्मानमनुभात्यखिलं जगत् ।
इति श्रुत्यंतरे स्पष्टमुक्तं ज्योतिष्ट्वमात्मनः ॥१८७
ध्यायंत्यां ध्यायतीवात्मा चलंत्यां चलतीव च ।
बुद्धिस्थे ध्यानचलने कल्पेते बुद्धिसाक्षिणि१८८
आलोके व्यंजके यद्वदभिव्यंग्यघटाकृतिः ।
आरोप्यते तथा बौद्धः संसारो बुद्धिसाक्षिणि८९
आत्मबुद्धिमनश्चक्षुरालोकविषयैर्युते ।
न जागरे स्वयं ज्योतिर्विवेक्तुं शक्यते नृभिः१९०

न सुषुप्तेऽपि तच्छक्यं भास्याभिव्यक्त्यभावतः ।
स्वप्ने तु भास्यमस्त्येकं ततो ज्योतिर्विविच्यते १९१
विद्यायाः परमोत्कर्षे जाग्रत्साक्ष्यात्मवासना ।
सर्वोऽस्मीति मतिं स्वप्ने करोत्यद्वैतभासिनि १९२
अदर्शनं सर्वथेति तदाहुरविवेकिनः ।
तद्विवेच्य तथा चात्मा पश्यन्नेव न पश्यति १९३
साक्षी चैतन्यनित्यत्वात्पश्यन्नेव व्यवस्थितः ।
ज्ञातृज्ञानज्ञेयलोपाद्व्यवहारं न पश्यति ॥ १९४ ॥
तस्मात्सुप्तौ चिदद्वैतं यद्रूपं परमात्मनः ।
एतद्दृढयितुं प्रोक्ताः पर्याया वहवः श्रुतौ ॥१९५
पुंसो हृदि श्रिताः कामा मुच्यंते निखिला यदा ।
तदानीममृतो भूत्वा ब्रह्मैवात्र समश्नुते ॥ १९६ ॥
ननु ब्रह्माश्नुतेऽत्रेति जीवतो मुक्तिरीरिता ।
जीवत्वे को विशेषोऽस्य वंधान्मुक्तावितीर्यताम् १९७
अभिमानः पूर्वमासीद्देहादावधुना तथा ।
नास्तीत्यत्रातिविस्पष्टः सर्पदृष्टांत उच्यते॥१९८॥

ननु भिक्षादिना देहपोषणादौ समे सति ।
आत्मतत्त्वविदः कोऽतिशयो मूढादितीर्यताम् ९९
सर्वेषामपि मूढानां चित्ते स्तः पुण्यपापयोः ।
एतमेवैकमात्मज्ञं चित्ते द्वे प्राप्नुतो न हि ॥२००॥
उभे उहेति हेतूक्ते तच्चिंताया असंभवे ।
अतिक्रामति तत्त्वज्ञः पुण्यपापे उभे अपि॥२०१
कृते देहादिभिर्वास्तां द्वे कृते वा द्विधाऽपि च ।
एवं तत्त्वविदं ते द्वे नैव तापयतः क्वचित् ॥२०२
विद्वद्दृष्ट्या स एवात्मा जरामरणवर्जितः ।
आनंदो भयहीनश्च ब्रह्मैवाजो न चेतरः ॥२०३
य एवं ब्रह्म जानाति तद्ब्रह्मैव भवत्यसौ ।
हिशब्दोऽशेषवेदांतप्रसिद्धं सूचयेदिह ॥ २०४ ॥
१९ज्ञाताज्ञाते साक्षिभास्ये स साक्षी भासते स्वयम्
ज्ञाताज्ञातपरित्यागे साक्षिशेषो ह्यतिस्फुटः २०५
वेद्मीति यद्बलादात्थ न वेद्मीत्यपि यद्बलात् ।
तदन्यनिरपेक्षं सद्भातीत्यस्मद्गुरोर्वचः ॥ २०६ ॥

अज्ञातज्ञातयोः साक्षी ब्रह्मेत्येवंविधा तु धीः ।
अज्ञानं नाशयत्येव न ब्रह्म स्फोरयत्यसौ २०७
स्वतः स्फुरणरूपेऽस्मिन्किमन्यत्स्फुरणं भवेत् ।
स्फोर्यत्वाभावतस्तस्य न मनोगम्यता भवेत् २०८
अवाङ्मनसगम्यं तदाचार्येणोपदिश्यते ।
शिष्येण बुध्यते चेत्थं न किंचिन्नोपपद्यते ॥२०९
यन्नाभिधीयते वाचा वाग्येन प्रेर्यते सदा ।
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥२१०॥
अन्यैरपींद्रियैर्गम्यं न यत्किंत्वक्षभासकम् ।
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥२११॥
यल्लौकिकं वस्तु यच्च ब्रह्म तद्धि विलक्षणम् ।
यस्यामतं तस्य मतं मतं यस्य न वेद सः॥२१२॥
लोके घटो मतो येन स घटज्ञ इतीर्यते ।
येन मंत्रा मतं ब्रह्म न त्वसौ ब्रह्मविद्भवेत् २१३
मंतृमंतव्यरूपेण विविधत्वं विजानता ।
अविज्ञातं ब्रह्मतत्त्वमखंडैकरसात्मकम् ॥२१४॥

विविधत्वमविज्ञाय यदखंडत्ववेदनम् ।
तद्भवेद्ब्रह्मविज्ञानं धीमद्भिर्बुध्यतां तथा ॥२१५॥
ईदृशः प्रतिबोधो यस्तेन चेद्विदितं तदा ।
मतं ब्रह्म भवेद्विद्वानमृतत्वं हि विंदते ॥ २१६ ॥
नानात्मत्वभ्रमोच्छित्त्यै तत्तद्देहेष्ववस्थितम् ।
स्वात्मत्वेनैव निश्चित्य धीरा यांति कृतार्थताम् २१७
२०— यथा सूर्यस्तमः सर्वं प्रकाशीकुरुते तथा ।
अनुज्ञाता जगत्सर्वं स्वात्ममात्रं करोति हि २१८
दाह्यं दग्ध्वा यथा वह्निर्निर्व्यापारोऽवशिष्यते ।
अनुज्ञैकरसस्तद्वच्चिन्मात्रः परिशिष्यते ॥२१९ ॥
नृसिंहे भीषणे भद्रे मृत्युमृत्यौ न मय्यजा। भाति
हिंसाकरी माया न मय्यस्ति चिदात्मनि॥२२०
नमामीति पदाद्ब्रह्माभिन्नतामनुचिंतयेत् ।
ईदृग्योगी स्यादकामः काम्यमस्य न संभवेत् २२१

॥ इति अनुभूतिप्रकाशसारोद्धारः ॥

# ॥ अथ श्रीमद्भागवतम् ॥

॥ श्रीमद्व्यासविरचितम् ॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥१॥
तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि ॥
ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥ २॥
स वै प्रियतमश्चात्मा यतो न भयमण्वपि ॥
इति वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः ॥३॥
सुप्तप्रबोधयोः संधावात्मनोगतिमात्मदृक् ॥
पश्यन्बंधं च मोक्षं च मायामात्रं न वस्तुतः॥ ४ ॥
एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ॥
नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥ ५ ॥
सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ॥
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ६ ॥
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥
एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥७॥

# ॥ अथ श्रीमद्भगवद्गीता ॥

॥ श्रीमद्व्यासग्रथिता ॥

नासतो विद्यते भावो नाभावो विद्यते सतः ॥
उभयोरपि दृष्टोंऽतस्त्वनयोस्तत्त्वदर्शिभिः ॥१॥
य एनं वेत्ति हंतारं यश्चैनं मन्यते हतम् ॥
उभौ तौ न विजानीतो नायं हंति न हन्यते ॥२॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥३
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥
शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥४॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥५॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥
गच्छंत्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ६ ॥
सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ॥
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥७॥

# ॥ अथ विवेकचूडामणिः ॥

॥ श्रीमच्छंकराचार्यविरचिता ॥

---

विनिवृत्तिर्भवेत्तस्य सम्यक्ज्ञानेन नान्यथा ॥
ब्रह्मात्मैकत्वविज्ञानं सम्यक्ज्ञानं श्रुतेर्मतम् ॥१॥
सर्वे येनानुभूयंते यः स्वयं नानुभूयते ॥
तमात्मानं वेदितारं विद्धि बुद्ध्या सुसूक्ष्मया॥२॥
ज्ञातृज्ञेयज्ञानशून्यमनंतं निर्विकल्पकम् ॥
केवलाखंडचिन्मात्रं परं तत्त्वं विदुर्बुधाः ॥ ३ ॥
क्रियानाशे भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः ॥
वासनाप्रक्षयो मोक्षः सा जीवन्मुक्तिरिष्यते ॥४॥

वेदांतसिद्धांतनिरुक्तिरेषा
ब्रह्मैव जीवः सकलं जगच्च ॥
अखंडरूपस्थितिरेव मोक्षो
ब्रह्माद्वितीये श्रुतयः प्रमाणम् ॥ ५ ॥

अविज्ञाते परे तत्त्वे विद्याधीतिस्तु निष्फला ॥
विज्ञाते हि परे तत्त्वे विद्याधीतिस्तु निष्फला॥६

# ॥ अथापरोक्षानुभूतिः ॥

॥ श्रीमच्छंकराचार्यविरचिता ॥

नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः ॥
यथा पदार्थभानं हि प्रकाशेन विना क्वचित् ॥१॥
आत्मा नित्यो हि सद्रूपो देहोऽनित्यो ह्यसन्मयः
तयोरैक्यं प्रपश्यंति किमज्ञानमतः परम् ॥ २ ॥
ब्रह्मैवाहं समः शांतः सच्चिदानंदलक्षणः ॥
नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ ३ ॥
अहं विकारहीनस्तु देहो नित्यं विकारवान् ॥
इति प्रतीयते साक्षात्कथं स्याद्देहकः पुमान् ॥४॥
चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् ॥
जीवत्वं च मृषा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥ ५ ॥
दोषोऽपि विहितः श्रुत्या मृत्योर्मृत्युं स गच्छति ॥
...इह पश्यति नानात्वं मायया वंचितो नरः ॥ ६ ॥
...दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिंतयेत् ॥
... यत्रेद्धान्नित्यसुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥ ७ ॥

# ॥ अथ स्वात्मनिरूपणम् ॥

॥ श्रीमच्छंकराचार्यविरचितम् ॥

प्रत्यक्षाद्यनवगतं
श्रुत्या प्रतिपादनीयमद्वैतम् ॥
द्वैतं न प्रतिपाद्यं
तस्य स्वयमेव लोकसिद्धत्वात् ॥ १ ॥

अहमालंवनसिद्धं
कस्य परोक्षं भवेदिदं ब्रह्म ॥
तदपि विचारविहीनै-
रपरोक्षयितुं न शक्यते मुग्धैः ॥ २ ॥

स्वात्ममये महति पटे
विविधजगच्चित्रमात्मना लिखितम् ॥
स्वयमेव केवलमसौ
पश्यन्प्रमुदं प्रयाति परमात्मा ॥ ३ ॥

कवलितचंचलचेतो । गुरुतरमंङ्कजातपरितोषा ॥
शेते हृदयगुहायां। चिरतरमेकैव चिन्मयी भुजगी ४

# ॥ अथात्मबोधः ॥

॥ श्रीमच्छंकराचार्यविरचितः ॥

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम्॥
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति॥१॥
परिच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः॥
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥२॥
तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा ॥
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ३ ॥
रज्जुसर्पवदात्मनं जीवं ज्ञात्वा भयं भवेत् ॥
नाहं जीवः परात्मेतिज्ञातं चेन्निर्भयो भवेत् ॥४॥
स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः ॥
न दीपस्यान्यदीपेच्छा यथा स्वात्मा प्रकाशते ॥५॥
निषिद्ध्य निखिलोपाधीन्नेतिनेतीतिवाक्यतः ॥
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥६॥
अतद्व्यावृत्तिरूपेण वेदांतैर्लक्ष्यतेऽव्ययम् ॥
अखंडानंदमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ७ ॥

# ॥ अथ वाक्यसुधाकरः ॥

॥ श्रीभारतीतीर्थविरचितः ॥

भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥
क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १ ॥
अवच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पितः ॥
विज्ञेयस्त्रिविधो जीवस्तत्राऽऽद्यः पारमार्थिकः॥२
अवच्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवं ॥
तस्मिन्जीवत्वमापाताद्ब्रह्मत्वं तु स्वभावतः॥ ३ ॥
अवच्छिन्नस्य जीवस्य तादात्म्यं ब्रह्मणा सह ॥
तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः॥ ४ ॥
प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ॥
तल्लये सच्चिदानंदाः पर्यवस्यंति साक्षिणि ॥५॥

# ॥ अथ नैष्कर्म्यसिद्धिः ॥

॥ श्रीसुरेश्वराचार्यविरचिता ॥

ऐकात्म्यापत्तिर्या स्वात्मानुभवसंश्रया ॥
साऽविद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः॥ १॥
वाक्यैकगम्यं यद्वस्तु नान्यस्मात्तत्र विश्वसेत् ॥
नाप्रमेये स्वतः सिद्धोऽविश्वासः कथमात्मनि ॥२
नामादिभ्यः परो भूमा निष्कलोऽकारकोऽक्रियः
स एवात्मवतामात्मा स्वतः सिद्धः स एव नः ॥३॥
नर्त्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः॥
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥४
दुःखराशेर्विचित्रस्य सेयं भ्रांतिश्चिरंतनी ॥
मूलं संसारवृक्षस्य तद्बाधस्तत्त्वदर्शनात् ॥ ५ ॥
अहंशब्दस्य या निष्ठा ज्योतिषि प्रत्यगात्मनि ॥
सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥ ६ ॥
नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन॥
इत्यजानंविजानाति यः स ब्रह्मविदुत्तमः ॥ ७ ॥

# ॥ अथ सनत्सुजातसंहिता ॥

॥ श्रीमद्वेदव्यासग्रथिता ॥

तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः ॥
नैनं मन्येत भूयिष्ठं बाह्यमाभ्यंतरं जनम् ॥ १ ॥
को ह्येनमंतरात्मानं ब्राह्मणो मंतुमर्हति ॥
निर्लिंगमचलं शुद्धं सर्वद्वंद्वविवर्जितम् ॥ २ ॥
न वेदानां वेदिता कश्चिदस्ति
वेद्येन वेदं न विदुर्न वेद्यम् ॥
यो वेद वेदं स च वेद वेद्यं
यो वेद वेद्यं न स वेद सत्यम् ॥ ३ ॥
हरंति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ ४ ॥
तद्वच्चराचरं सर्वं ब्रह्मण्युत्पद्य लीयते ॥
योगिनस्तं प्रपश्यंति भगवंतं सनातनम् ॥ ५ ॥

# ॥ अथ मांडूक्योपनिषदो गौडपादीयकारिका ॥

॥ श्रीगौडपादाचार्यविरचिता ॥

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १ ॥
आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥
वितथैः सदृशाः संतोऽवितथा इव लक्षिताः ॥२
स्वप्नमाये यथा दृष्टे गंधर्वनगरं यथा ॥
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३ ॥
नात्मभावेन नानेदं न स्वेनापि कथञ्चन ॥
न पृथङ् नापृथक्किञ्चिदिति तत्त्वविदो विदुः ॥४
वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः ॥
निर्विकल्पो ह्ययं दृष्टः प्रपंचोपशमोऽद्वयः ॥ ५ ॥
रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ॥
आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः॥६
स एष नेति नेतीति व्याख्यातं निन्हुते यतः ॥
सर्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते ॥ ७ ॥

# ॥ अथात्मपुराणम् ॥

॥ श्रीशंकरानंदस्वामिरचितम् ॥

आदावंते च मध्ये च यत्स्वरूपं न संत्यजेत् ॥
सत्यं तत्तादृशं प्रोक्तं मत्तोऽन्यत्तादृशं न हि ॥१॥
आनंदात्मनि चाध्यासे भेदबुद्धिस्ततो मृषा ॥
अहं ब्रह्मास्मि बोधश्चेत्पुण्यपुंजविपाकतः ॥ २ ॥
यो द्वितीयं विजानाति प्रतिकूलकरं तथा ॥
स एव हि जनो लोके विमुह्यति विभेति च॥३॥
स्वप्ने यथा हि बहवः सुखदुःखादिभागिनः ॥
आत्मनस्तद्वदेवेमे न भिन्ना वस्तुतः क्वचित्॥४॥
अयमेव स आत्मा यो हृदये सर्वदेहिनाम् ॥
नानाबुद्धिप्रचाराणां साक्षी संगविवर्जितः ॥५॥
अबद्धः सर्वदा यस्मात्तस्मान्न व्यथतेऽपि च ॥
विनाशरहितस्तेन हिंस्यते नैव केन चित् ॥ ६ ॥
आत्मलाभात्परोलाभो नास्ति लोकत्रये यतः ॥
स दत्तो येन तस्मै का दक्षिणा नात्मसंश्रया॥७॥

# ॥ अथ योगवासिष्ठम् ॥

॥ श्रीमद्वाल्मीकिमुनिकृतम् ॥

दृश्यं नास्तीतिबोधेन मनसो दृश्यमार्जनम् ॥
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ १ ॥
भारोऽविवेकिनः शास्त्रं भारो ज्ञानं च रागिणः ॥
अशांतस्य मनो भारो भारोऽनात्मविदो वपुः २
विचारात्तीक्ष्णतामेत्य धीः पश्यति परं पदम् ॥
दीर्घसंसाररोगस्य विचारो हि महौषधम् ॥ ३ ॥
नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ॥
यथा प्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥४॥
सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा ॥
इदं जगदहं चेति बोधाभ्यासं विदुः परे ॥ ५ ॥
मनसैव मनश्छित्वा पाशं परमबंधनम् ॥
भवादुत्तारयात्मानं नासावन्येन तार्यते ॥ ६ ॥
अन्या यास्तु कला राम विनाभ्यासाद्धि नश्यति
इयं ज्ञानकला साधो सकृज्जाताभिवर्धते ॥ ७ ॥

# ॥ अथोपदेशसहस्री ॥

॥ श्रीमच्छंकराचार्यविरचिता ॥

इदमंशोऽहमित्यत्र त्याज्योऽनात्मेति पंडितैः ॥
अहं ब्रह्मेति शिष्टांशो भूतपूर्वगतेर्भवेत् ॥ १ ॥
बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा ॥
मया तस्मात्परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥ २ ॥
अहं ममैको न तदन्यदिष्यते ॥
तथा न कस्याप्यहमस्म्यसंगतः ॥
असंगरूपोऽहमतो न मे त्वया ॥
कृतेन कार्यं तव चाद्वयत्वतः ॥ ३ ॥
विज्ञातेर्यस्तु विज्ञाता सत्वमित्युच्यते यतः ॥
स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥ ४ ॥
कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः ॥
कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितम् ॥ ५ ॥
स्वयंलब्धस्वभावत्वाल्लाभस्तस्य न चान्यतः ॥
अन्यापेक्षस्तु यो लाभः सोऽन्यदृष्टिसमुद्भवः ॥ ६

# ॥ अथाष्टावक्रगीता ॥

॥ अप्रसिद्धनामकावधूतविरचिता ॥

न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ॥
असंगोऽसि निराकारो विश्वसाक्षी सुखी भव१
एको द्रष्टाऽसि सर्वस्य मुक्तप्रायोऽसि सर्वदा ॥
अयमेव हि ते बंधो द्रष्टारं पश्यसीतरम् ॥ २ ॥
मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि ॥
किंवदंतीह सत्येयं या मतिः सा गतिर्भवेत्॥३॥
आत्मा साक्षी विभुः पूर्ण एको मुक्तश्चिदक्रियः॥
असंगो निःस्पृहः शांतो भ्रमात्संसारवानिव॥४॥
ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवम् ॥
अज्ञानाद्भाति यत्रेदं सोऽहमस्मि निरंजनः॥५॥
द्वैतमूलमहो दुःखं नान्यत्तस्याऽस्ति भेषजम् ॥
दृश्यमेतन्मृषा सर्वमेकोऽहं चिद्रसोऽमलः॥ ६ ॥
विज्ञाते साक्षिपुरुषे परमात्मनि चेश्वरे ॥
नैराश्ये बंधमोक्षे च न चिंता मुक्तये मम ॥७॥

# ॥ अथाध्यात्मरामायणम् ॥

॥ श्रीमद्वेदव्यासविरचितम् ॥

जानंति नैवं हृदये स्थितं वै
चामीकरं कंठगतं यथाऽज्ञाः ॥
यथाऽप्रकाशो न तु विद्यते रवौ
ज्योतिःस्वभावे परमेश्वरे तथा ॥ १ ॥
साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि ॥
साक्षिण्यारोप्यते भ्रांत्या जीवत्वं च तथाऽबुधैः २
ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः ॥
तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥३॥
कदाचिदात्मा न मृतो न जायते
न क्षीयते नापि विवर्धतेऽनवः ॥
निरस्तसर्वातिशयः सुखात्मकः
स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ४ ॥
निःसंकल्पो यथा प्राप्तव्यवहारपरो भव ॥
क्षये संकल्पजालस्य जीवो ब्रह्मत्वमाप्नुयात् ॥५॥

# ॥ अथाद्वैतामृतः ॥

## ॥ श्रीजगन्नाथसरस्वतीविरचितः ॥

विषयास्तावदेवैते प्रगल्भंतेऽबलादयः ॥
प्रत्यगात्मरतिर्यावद्दृढा नोदेति देहिनः ॥ १ ॥
आत्मप्रेम्णि समुत्पन्ने विषयप्रेम नश्यति ॥
योषित्प्रेम्णि समुत्पन्ने मातृप्रेमेव कामिनाम् ॥२॥
स्वयंप्रकाशमानं सद्यदन्यस्य प्रकाशकम् ॥
तज्ज्योतिरिष्टं तव चेत्तदात्मैव न चापरम् ॥३॥
तदेव ज्योतिषां ज्योतिरिति श्रुतिवचः स्फुटम् ॥
भांतं तमनुभातीदं सर्वमित्यपरं वचः ॥ ४ ॥
रसालफलवत्पुंसामंतःकरणमिष्यते ॥
अपक्वं बहुदोषाय पक्वं तोषाय कल्पते ॥ ५ ॥
लब्धत्रैलोक्यराज्यो ना भिक्षां नाकांक्षते यथा ॥
एवं लब्धपरानंदः क्षुद्रानंदं न कांक्षति ॥ ६ ॥
अनुपाध्यनुकूलत्ववेद्यं यत्तत्सुखं मतम् ॥
इति यत्तार्किकैः प्रोक्तं तदात्मन्येव युज्यते ॥७॥

# ॥ अथ सिद्धांतचंद्रिकोद्गारः ॥

॥ श्रीरामचंद्रयतिशिष्यविरचितः ॥

दीपः कोऽपि समिंधे । स्नेहदशाधारहीनमस्पंदः
तदुपरि किमपि तमिस्रं
त्रैलोक्यमदो विविच्य दर्शयति ॥ १ ॥
विसृजति यदैव भुवनं
चिन्नाम्नि व्योम्नि कालिका काचित् ॥
परितो बत प्लवंते
ब्रह्माद्यभिधानफल्गुमंडूकाः ॥ २ ॥
जरठापि काचिदसती
संदर्श्य गुणान् परस्य पुरुषस्य ॥
संगं विनैव हसितैः
सर्वस्वं हरति हंत किं ब्रूमः ॥ ३ ॥
निपुणैः परीक्ष्यमाणे
निगमतुलायामुभौ समारोप्य ॥
गुरुरभवदीश्वरादपि
गुरुरिति तन्नाम सार्थकं नाम ॥ ४ ॥

# ॥ अथ संक्षेपशारीरकः ॥

॥ श्रीसर्वज्ञात्ममुनिविरचितम् ॥

प्रत्यक्प्रमाणकमसत्यपराक्प्रभेदं
प्रक्षीणकारणविकारविभागमेकम् ॥
चैतन्यमात्रपरमार्थनिजस्वभावं
प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यम् ॥ १ ॥
देशकालपुरुषैरवस्थया
जागरस्य खलु कारणं तमः ॥
साकमेव सहसा निरस्यते
वेदवाक्यजनितात्मसंविदा ॥ २ ॥
नित्यबोधपरिपीडितं जगद्
विभ्रमं नुदति वाक्यजा मतिः ॥
वासुदेवनिहतं धनंजयो
हंति कौरवकुलं यथा पुनः ॥ ३ ॥
सत्यतो यदि मृषा न भिद्यते
सत्यमेव सुतरां तदिष्यताम् ॥
न द्वयात्मकतयाऽनृतं मतं
पक्षयोः कथितदूषणद्वयात् ॥ ४ ॥

# ॥ अथ ब्रह्मगीता ॥

॥ श्रीमद्वेदव्यासग्रथिता ॥

प्रतिष्ठा सर्वभूतानां प्रज्ञैषा पारमेश्वरी ॥
प्रज्ञानमेव तद्ब्रह्म शिवरुद्रादिसंज्ञितम् ॥ १ ॥
ब्रह्मवेदनमात्रेण ब्रह्माऽऽप्नोत्येव मानवः ॥
अत्र नास्त्येव संदेहस्त्रिदिवः शपथयाम्यहम् ॥ २ ॥
यदा ह्येवैष एतस्मिन्नदृश्यत्वादिलक्षणे ॥
निर्भेदं परमेकत्वं विदते सुरसत्तमाः ॥ ३ ॥
तदेवाभयमत्यंतं कल्याणं परमामृतम् ॥
स्वात्मभूतं परं ब्रह्म स याति स्वर्गवासिनः ॥४॥
यदा ह्येवैष एतस्मिन्नल्पमप्यंतरं नरः ॥
विजानाति तदा तस्य भयं स्यान्नात्र संशयः॥५॥
विहाय साक्ष्यं देहादि मायांतं तु विवेकतः ॥
सर्वसाक्षिणमात्मानं यः पश्यति स पश्यति ॥६
तद्ब्रह्मानंदमद्वंद्वं निर्गुणं सत्यचिद्घनम् ॥
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन ॥७॥

# ॥ अथ तोटकः ॥

॥ श्रीतोटकाचार्य्यविरचितम् ॥

विनिवर्त्य रतिं विषये विषमां
परिमुच्य शरीरनिबद्धमतिम् ॥
परमात्मपदे भव नित्यरतो
जहि मोहमयं भ्रममात्ममतेः ॥ १ ॥

विसृजान्नमयादिषु पंचसु ता-
महमस्मि ममेति मतिं सततम् ॥
दृशिरूपमनंतमृतं विगुणं
हृदयस्थमवेहि सदाऽहमिति ॥ २ ॥

वदनं नयनं च तथा श्रवणं
मन एव च येन मतं सततम् ॥
अवगच्छत देवपदं परमं
त्वमिति श्रुतिरीक्षितुरुक्तवती ॥ ३ ॥

अहमस्मि चरस्थिरदेहधियां
चरितस्य सदेक्षक एक इति ॥
न भवेदत एव मदन्य इति
त्वमवेहि सुमेध इदं सुदृढम् ॥ ४ ॥

